ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

४० वर्षे तृतीयोऽङ्कः ( जुलाईमासाङ्कः ) २०१५ ई०

सम्पादकः

प्रो० रमेशकुमारपाण्डेयः

कुलपतिः

सहसम्पादकः

डॉ० ज्ञानधरपाठकः

प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

## (A REFEREED QUARTERLY RESEARCH JOURNAL)

४० वर्षे तृतीयोऽङ्कः ( जुलाईमासाङ्कः ) २०१५ ई०

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**

प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

प्रकाशकः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया,
नवदेहली-११००१६



ISSN :- 0974 - 8946
४० वर्षे तृतीयोऽङ्कः (जुलाईमासाङ्कः) २०१५ ई०



मुद्रकः
**अमरप्रिंटिंगप्रैसः**
दिल्ली
amarprintingpress@gmail.com

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

**सम्पादकमण्डलम्**

प्रो० जयकान्तसिंहशर्मा

प्रो० हरेरामत्रिपाठी

प्रो० भागीरथिनन्दः

**सहसम्पादकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनु-सन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषय-गवेषणपूर्णानां निबन्धानां सङ्ग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्णनिबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

विदन्त्येव विपश्चितो यद् सुरभारतीवाङ्मयस्य पुनः पुनः परिशीलनेनापि तत्पारं न स्वप्नेऽपि द्रष्टुं शक्यते। तदेवेदं किल वाङ्मयं यस्य मूलस्पर्शेण तच्छाखा-प्रशाखा-पत्र-पुष्प-वृन्त-फलादीनि विद्वन्मनसि स्वोपस्थितिं प्रदर्श्य नवनवचिन्तनभूमिं सृजन्ति। किञ्च विदुषामानन्त्यात्, चिन्तनसरणीनामानन्त्याच्च ते ते वाङ्मयविषया अनन्ततामुपयान्ति। दृश्यन्ते च तेऽनन्ततया द्रष्टॄणां प्रतिभागुणस्यानन्त्यात्। अतस्तादृशप्रत्यग्रदर्शनवतां विचारानादाय पाठकानां पुरतो नववस्तुसम्भारं परिवेषयन्ती सुतरां चकास्ति शोधप्रभेयमिति वयं नु प्रतीमः। उपन्यस्ता अत्र साहित्ये भाविकत्वगुणविकासक्रमसम्बद्धो विचार आचार्यामिताशर्मामहोदयायाः, दीपककुमारद्विवेदिनः योगवेदान्तयोः समाधिनिरूपणम्, सियंकाद्विवेदिचर्चितमपवर्गस्वरूपम्, सुरभिशर्मापरिशीलितः, सृष्टिविमर्शः, व्याकरणे निपातार्थविचार इति रामनारायणद्विवेदिनः, विशिष्टाद्वैतनये प्रमेयमीमांसेति रामनरेशत्रिपाठिनः, बच्छराजदूगडस्य मनोविज्ञानविचारः सौन्दर्यरङ्गमञ्चचिन्तनपरो लेखः पीकेपण्डामहाभागस्य, तर्कमीमांसेति अरुणमिश्रस्य, कमलेशरानीमहोदयाया भवभूतिकृते उत्तररामचरिते नारीशक्तीकरणम्, आङ्ग्लभाषायां के.जी.शेषाद्रेः पुरातनसाहित्ये संस्कृतौ च गवय-गौरमृग-गयलादिचर्चेत्याहत्य शोधप्रभायाः अस्मिन्नङ्के विविधविषयविश्लेषणपरा एकादश लेखाः। एवं प्रतिभाविशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोऽहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो. रमेशकुमारपाण्डेयः**

कुलपतिः

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग



## English Section

# भामहदण्डि-सम्मत-भाविकत्वप्रबन्धगुणस्य वक्रोक्तिजीविते विकासक्रमः

**प्रो. अमिता शर्मा**

भामहदण्डिभ्यां प्रतिपादितस्य भाविकत्वालङ्कारस्य पल्लवनं परवर्तिकाव्यशास्त्रीयग्रन्थेषु विशेषतया वक्रोक्तिजीवितेऽत्र समालोचनीयम्। प्रथमं तावत् ताभ्यां निरूपितस्य भाविकत्वालङ्कारस्य विमर्शः प्रस्तूयते। भामहेन काव्यालङ्कारस्य तृतीयपरिच्छेदे येऽलङ्काराः परिगणितास्तेषु भाविकत्वमप्यस्ति **'भाविकत्वं च निजगुणालङ्कारं सुमेधसः'**।[1] अलङ्कारस्यास्य वैशिष्ट्यमिदं यदेष शब्दमात्रमर्थमात्रं वा नालङ्करोत्यपितु प्रबन्धविषयकोऽस्ति-

**भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम्।**
**प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः॥**[2]

**चित्रोदात्ताद्भुतार्थत्वं कथायाः स्वाभिनीतता।**
**शब्दानाकुलता चेति तस्य हेतुं प्रचक्षते॥**[3]

यस्मिन् प्रबन्धे भूताः भाविनश्चार्थाः प्रत्यक्षा इव दृश्यते तत्रालङ्कारोऽयं वर्तते। अस्य हेतुतया पञ्चतत्त्वान्याकलितानि भामहेन यथा हि चित्रार्थत्वम्, उदात्तार्थत्वम्, उद्भुतार्थत्वं कथायाः सुविभक्तता वाचामनाकुलता च। 'प्रबन्ध' इत्यनेन सम्पूर्णमपि काव्यम् अथ च उपकार्योपकारकभावेन निरूपितानि प्रकरणानि चाप्यभिप्रेतानि। रावणवधमहाकाव्यस्य द्वादशसर्गो महाकविभट्टिना भाविकत्वालङ्कारस्य निदर्शनत्वेन विरचितः। द्वादशसर्गे षष्ठश्लोकव्याख्यायां जयमङ्गलाटीकायां तथ्यमिदमित्थमुद्घाटितम्-

'इयता प्रबन्धेन उदात्तार्थाभिधानादुदात्तार्थत्वमुक्तम्। इत उत्तरं प्रहस्तरावणविभीषणमातामहकुम्भ-कर्णादीनां वचनप्रबन्धेषु चित्राद्भुतार्थत्वं द्रष्टव्यम्।' अत्र इयता प्रबन्धेन इत्यस्याभिप्रायोऽस्ति पञ्चश्लोकैरिति अपि च ध्वन्यालोके आनन्दवर्धनाचार्यस्योक्त्यापि तथ्यमिदं पुष्टं भवति। यथा हि-

**अनुस्वानोपमात्मापि प्रभेदो य उदाहृतः।**
**ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित्॥**[4]

---

1. काव्यालङ्कारः- 3.4
2. काव्यालङ्कारः- 3.52
3. काव्यालङ्कारः- 3.53 , 3.4
4. ध्वन्यालोकः - 3.15

अस्योदाहरणत्वेन तेनोक्तम्– तद्यथा मधुमथनविजये पाञ्चजन्योक्तिषु। अत्र पाञ्चजन्योक्तयः प्रबन्धैकदेशरूपेण विराजन्ते। 'प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः' इत्यनेन कवेः प्रतिभा प्रदर्शिता। वस्तुतः कविः ऋषिरिव सूक्ष्मदर्शनशक्त्या सम्पूर्णामपि कथां प्रत्यक्षामिव पश्यति प्रदर्शयति च। यथा अनर्घराघवे वर्णितम्–

**अविद्याबीजविध्वंसादयमार्षेण चक्षुषा।**
**कालौ भूतभविष्यन्तौ वर्तमानमवीविशत्।।**[1]

यथा वा उक्तं भट्टतौतेन–

**स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः।**
**दर्शनात् वर्णनाच्चारूढा लोके कविश्रुतिः।।**

**तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः।**
**नोदिता कविता लोके यावज्जाता न वर्णना।।**[2]

सहृदयैर्वर्णनमिदं यदा पठ्यते श्रूयते वा तदा सर्वं प्रत्यक्षमिवानुभूयते। 'चित्रोदात्ताद्भुतार्थत्वम्' इत्यनेन प्रतिपाद्यार्थस्य वैशिष्ट्यमुक्तम्। एवंविधेनैवार्थेन सर्वं प्रत्यक्षमिवाभाति। कथायाः स्वाभिनीतता स्वविनीतता (पाठान्तरम्) वा इत्यस्याभिप्रायोऽस्ति कथायाः सुबोधता प्रकरणानां सुबद्धता वा। डॉ. वी. राघवन् महोदयेनायमर्थ इत्थं प्रदर्शितः– It simply means that the story should progress very smoothly and with gripping interest, there being no hitch, no vagueness and nothing mystifying".[3]

'वाचामनाकुलता' पदमिदं प्रतीहारेन्दुराजेन लघुवृत्तावित्थं व्याख्यातम्– झगित्यर्थप्रतीतिकारिता। तस्यां हि सत्यां कवेः सम्बन्धी यो भावः आशयः शृङ्गारादिरससंवलितचतुर्वर्गोपायभूतविशिष्टार्थोल्लेखी से कविनेव सहृदयैः श्रोतृभिः स्वाभिप्रायाभेदेन तत्तत्काव्यप्रतिबिम्बितरूपतया साक्षात्क्रियते। श्रोतृणामपि हि तथाविधस्वच्छशब्दानुभवद्रावितान्तरात्मनां सहृदयानां स्वाभिप्रायप्रतिमुद्रा तत्र संक्रामति। अतः कवेर्योऽसावभिप्रायस्तद् गोचरीकृता भूता भाविनोऽपि पदार्थास्तत्र सहृदयैः श्रोतृभिः स्वाभिप्रायाभेदेन प्रत्यक्षा इव दृश्यते।[4]

इत्थं भामहसम्मतं भाविकत्वं प्रबन्धमलङ्करोति। उद्भटो यद्यपि भामहमनुसरति परमस्यालङ्कारस्य प्रबन्धविषयतां स न स्वीकरोति। तेनास्यालङ्कारस्य लक्षणमित्थं कृतम्–

---

1. अनर्घराघवम् – 2.34
2. काव्यानुशासने उद्धृतः
3. Studies on some Aspects of The Alankara Shastra P- 133
4. काव्यालङ्कारसारसंग्रहे लघुवृत्तिः– पृ. 141

**प्रत्यक्षा इव यत्रार्था दृश्यन्ते भूतभाविनः।**
**अत्यद्भुताः स्यात्तद्वाचामनाकुल्येन भाविकम्॥**[1]

अलङ्कारसर्वस्वे कृतमस्यालङ्कारस्य विश्लेषणं महत्त्वपूर्णमस्ति। अतएव तदपि निभालनीयम्। तत्र भामहमनुसृत्यास्य लक्षणमित्थं विहितम्-

**अतीतानागतयोः प्रत्यक्षायमाणत्वं भाविकम्।**[2]

अस्य सूत्रस्य वृत्तौ भामहाचार्यस्य मतं किञ्चत् स्पृष्टम् वृत्तिकारेण। यथा हि- ''अतीतानागतयोर्भूतभाविनोरर्थयोरलौकिकत्वेनात्यद्भुतत्वात्। व्यास्तसम्बन्धरहित-शब्दसन्दर्भसमर्पितत्वाच्च प्रत्यक्षायमाणत्वं भाविकम्। कविगतो भाव आशयः श्रोतरि प्रतिबिम्बत्वेनास्तीति भावो भावना वा पुनः पुनश्चेतसि निवेशनं सोऽत्रास्तीति।''

अत्र 'अद्धुतार्थत्वं' 'वाचामनाकुलता' इति द्वयमपि व्याख्यातम्। भूतभाविनावर्थौ यद्यलौकिकौ भवतः तदा तत्राद्भूतार्थत्वम् आयाति। शब्दश्च यदि कवेरभिप्रायमभिव्यक्तुं समर्थस्तदा 'वाचामनाकुलता' इति वैशिष्ट्यमपि तत्र दृश्यते। अथ चात्र 'प्रत्यक्ष' इति शब्दोऽपि व्याख्यातः येन काव्यस्य सम्बन्धो कविनेव सहृदयेन सह सम्पादितः यथा ह्युक्तं तेन-

'न हि प्रत्यक्षत्वं केवल वस्तुधर्मः प्रतिपत्त्रपेक्षयैव वस्तुनि तथाभावात्। यदाहुः- तत्र यो ज्ञानप्रतिभासमात्मनोऽन्वयव्यतिरेकानुकारयति स प्रत्यक्षः इति। केवलवस्तुप्रत्यक्षत्वे प्रतिपत्तु सामग्री उपयुज्यते। सा च काव्यार्थविदां भावनास्वाभावैव। सा च भावना वस्तगुतात्यद्भुत्वप्रयुक्ता।'[3]

अतएव 'प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः' इत्यत्र भामहाचार्येण काव्यस्य सम्बन्धः सहृदयैः सह प्रतिष्ठापितः इत्यभिप्रायोऽत्र स्पष्टीकृतः।

अलङ्कारसर्वस्वस्य वृत्त्या प्रतिभासते यदत्र प्रबन्धविषयकोऽयमलङ्कारः स्वीकृतः यतो ह्यत्र उदाहरणत्वेन हर्षचरितस्य वेदस्वरूपमिति प्रकरणमुद्धृतम्।

मम्मटादिभिः उद्भटस्यैवानुसरणं कृतम्। अत एव अस्यालङ्कारस्य मूलभावस्तत्र लुप्तप्राय इव दृश्यते यतोहि प्रबन्धालङ्कारोऽयमिति तैर्न स्वीकृतम्।

**आचार्यदण्डिनो मतम्**- आचार्यदण्डी भामहस्य समसामयिकः पूर्ववर्ती वा स्वीक्रियते। तेनापि प्रबन्धविषयकोऽलङ्कारोऽयमिति स्वीकृतः परमस्य लक्षणे किञ्चित् वैभिन्न्यं परिलक्ष्यते। यथाहि तेनोक्तम्-

---

1. काव्यालङ्कारसारसंग्रहः - 6.12
2. तत्रैव, सूत्रम् 80
3. तत्रैव, सूत्रम्-80, वृत्तिः

तद्भाविकमिति प्राहुः प्रबन्धविषयं गुणम्।
भावः कवेरभिप्रायः काव्येष्वासिद्धिसंस्थितः॥[1]

परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम्।
विशेषणानां व्यर्थानामक्रियास्थानवर्णना॥[2]

व्यक्तिरुक्तिक्रमबलाद् गम्भीरस्यापि वस्तुनः।
भावायत्तमिदं सर्वमिति तद्भाविकं विदुः॥[3].

'भावः कवेरभिप्रायः' सम्पूर्णे प्रबन्धे प्रतिभासते। कवेरभिप्रायमूलमेव भाविकम् इति कथितम्। कवेरभिप्रायोऽयं चतुर्भिः प्रकारैर्व्यक्तिमासादयति यथा हि इतिवृत्तस्य सर्वेषां पर्वणामन्यान्यपौषकत्वम्, मुख्यार्थानुपकारिणां विशेषणानामविधानम्, प्रकृतोपयुक्तविषयवर्णनम्, वचनोपन्यासक्रमबलात् गूढस्याप्यर्थस्याभिव्यक्तिः। एतेषां सर्वेषां कवेरभिप्रायरूपाणां भावानां भावालङ्काररूपता भवति।

दण्डिना प्रोक्तं भाविकालङ्कारस्य वैशिष्टयमिदं परवर्तिभिर्नैव गृहीतं परं प्रतीहारेन्दुराजेन स्वकीयलघुवृत्तौ भाविकालङ्कारव्याख्याप्रसंगे कवेरभिप्रायो भाव इति दण्डिनः संकल्पनान्तर्भाविता यथा हि 'कविसम्बन्धिनो भावस्य श्रोतृभावाभेदाध्यवसितस्य पुरःस्फुरद्रूपस्य विद्यामानत्वाद् भाविकव्यपदेशः। भावोऽस्मिन् विद्यते इति भाविकम्।[4]

इत्थं भामहदण्डिभ्यां भाविकालङ्कारः सर्वालङ्कारविलक्षणत्वेन प्रतिपादितः। उद्भटेन प्रतीहारेन्दुराजेन चाचार्यद्वयस्य संकल्पना मनाक् स्पृष्टा। परवर्तिकाले कुन्तकाचार्यविरचिते वक्रोक्तिजीविते विचारोऽयं सम्यग्रूपेण पल्लवितः। वस्तुतः वक्रोक्तिसिद्धान्तोऽपि बीजरूपेण भामहेनैव निरूपितः। यथा हि तेनोक्त-

निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम्।
मन्यन्तेऽतिशयोक्तिं तामलङ्कारतया यथा॥[5]

सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।[6]

सर्वालङ्कारबीजतयैवात्र वक्रोक्तिरङ्गीकृता। इदमेवाधृत्य कुन्तकेन वक्रोक्तिजीविते प्रतिपादितं यत् शब्दार्थावुभावपि वक्रोक्त्यालङ्कार्यौ, वक्रोक्तिश्च वैदग्ध्यभङ्गीभणितिरेव। यथा-

---

1. काव्यादर्शः, 2.364
2. काव्यादर्शः, 2.365
3. काव्यादर्शः, 2.366
4. काव्यालङ्कारसारसंग्रहटीका, पृ. 141
5. काव्यालङ्कारसारसंग्रहः, 2.81
6. काव्यालङ्कारसारसंग्रहः, 2.85

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते॥**[1]

कन्तकः स्वोपज्ञवृत्तौ वक्रोक्तिमित्थं निरूपयति- 'वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणीविचित्रै-वाभिधा'। 'लोकातिक्रान्तगोचरं वचः' 'प्रसिद्धाभिधानव्यतिरेकिणी' इत्यत्र साम्यं स्पष्टमेव। कुन्तकमते सम्पूर्णमपि काव्यं वक्रोक्त्यैवालङ्कृतं भवति। वक्रोक्तिश्च षट्प्रकारा तेनाभिहिता यथा हि वर्णविन्यासवक्रता, पदपूर्वार्धवक्रता, पदपरार्द्धवक्रता, वाक्यवक्रता, प्रकरणवक्रता, प्रबन्धवक्रता च। भामहाचार्यस्य सर्वालङ्कारमूलत्वेन प्रतिपादितां वक्रोक्तिमाश्रित्य न केवलं सा भावनाऽनेनाचार्येण नितरामुपबृंहिता, अपि तु भामहप्रतिपादितं भाविकालङ्कारस्याभिप्रायं सम्यक् परामृश्च शब्दार्थयोर्वैशिष्ट्यतया प्रकरणवक्रतात्वेन च समुन्मीलितम्। यथा हि-

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥**[2]

इत्यस्मिन् स्वकीये काव्यलक्षणे शब्दार्थयोर्वैशिष्ट्यं निरूपयता तेनोक्तम्-

**शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।**
**अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः॥**[3]

काव्यमार्गेऽस्मिन् कवेर्विवक्षितार्थस्य वाचक एक एव शब्दो भवति अन्येषु पर्यायशब्देषु सत्स्वपि। विवक्षितार्थवाचकप्रयोगेणैव शब्दगतमनाकुलत्वमायाति अथ च झटित्यर्थसमर्पणानन्तरं कवेरभिप्रायः स्फुटत्वेन प्रतीयते। झटित्यर्थसमर्पणेन प्रसादगुणो नाङ्गीकरणीयः यथा हि भाविकालङ्कारव्याख्याप्रसङ्गे अलङ्कारसर्वस्वकारेण वृत्तौ स्पष्टीकृतं यदत्र शब्दगतमनाकुलत्वं प्रसादगुणो नास्ति। यथा हि-

नाप्ययं शब्दानाकुलत्वहेतुको झगित्यर्थसमर्पणात् प्रसादाख्यो गुणः।

तस्य हि स्फुटास्फुटोभयवाच्यार्थगतत्वेन झटिति समर्पणं रूपम्।

अस्य तु झटिति समर्पकस्य सतः स्फुटत्वेन प्रतीतौ स्वरूपप्रतिलम्भः'।

अतएव 'शब्दानाकुलता' इति यदुक्तं भामहाचार्येण तेन विवक्षितार्थवाचकः शब्द एवाभिप्रेतः। प्रतीहारेन्दुराजेन लघुवृत्तावप्येतदुक्तम्- ''वाचामनाकुलता व्यस्तसम्बन्धरहितलोकप्रसिद्धशब्दोपनिबन्धनात् झगित्यर्थप्रतीतिकारिता। तस्यां हि सत्यां कवेः सम्बन्धी यो भाव आशयः शृङ्गारादिरससंवलित चतुर्वर्गोपायभूतविशिष्टार्थोल्लेखी स कविनेव सहृदयैः श्रोतृभिः स्वाभिप्रायाभेदेन तत्तत्काव्यप्रतिबिम्बित-रूपतया साक्षात्क्रियते''।[4]

---

1. व.जी. 1.10
2. व.जी. 1.7
3. व.जी. 1.9
4. काव्यालङ्कारसारसंग्रहटीका, पृ. 14)।

कुन्तकाचार्येण यदुदाहरणं प्रदत्तं तत्रेदमेववैशिष्ट्यं प्राप्यते यथा–

**द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः।**
**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥**

अत्र परमेश्वरवाचकशब्दसहस्रसंभवेऽपि कपालिन इति वीभत्सरसालम्बनविभाववाचकः शब्दो जुगुप्सास्पदत्वेन प्रयुज्यमानः कामपि वाचकवक्रतां विदधाति।[1] कवेः सम्बन्धी भाव एवात्र प्रकाशितः।

'अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः' इति यदुक्तं तेन चित्रोदात्ताद्भुतार्थत्वमेव स्पष्टीकृतम्। कुन्तकेन यदुदाहरणं प्रदत्तं तेनापि अस्यैव तथ्यस्य पोषणं भवति। यथा हि–

**तामभ्यगच्छद्रुदितानुसारी मुनिः कुशेध्माहरणाय यातः।**
**निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः॥**[2]

'अत्र कोऽसौ मुनिर्वाल्मीकिरिति पर्यायपदमात्रे वक्तव्ये परमकारुणिकस्य निषादनिर्भिन्नशकुनि-संदर्शनमात्रसमुत्थितः शोकः श्लोकतवमभजत यस्येति तस्य तदवस्थजनकराजपुत्रीदर्शनविवशवृत्तेरन्तः-करणपरिस्पन्दः करुणरसपरिपोषाङ्गतया सहृदयहृदयाह्लादकारी कवेरभिप्रेतः।'[3]

अनेन ज्ञायते यत् कुन्तकाचार्येण भाविकालङ्कारस्य निबन्धने यद्हेतुद्वयं शब्दार्थवैशिष्ट्यप्रतिपादनाय प्रदत्तं तस्यान्तर्भावोऽत्र काव्यलक्षणस्य व्याख्याने कृतः यतो हि काव्यलक्षणं तु सम्पूर्णेऽपि काव्ये घटते। 'प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः' इत्यत्र 'प्रत्यक्ष' इत्यस्य सम्बन्धः सहृदयेन सह भवतीति प्रतिपादनाय काव्यलक्षणे 'तद्विदाह्लादकारिणि' इति पदं सन्निहितम्। दण्डिनोक्तं वैशिष्ट्यं 'भावः कवेरभिप्रायः' इत्यप्यत्रान्तर्भावितम्।

**भाविकालङ्कारसन्दर्भे प्रकरणवक्रता–**

'सालङ्कारस्य काव्यता' इत्यस्य मतस्योद्घोषकः कुन्तकाचार्यः प्रकरणवक्रतामपि काव्यस्यालङ्कारत्वेन मनुते। प्रबन्धस्यैकदेशो नीरसः सौन्दर्यविहीनो वा भवति चेत् तर्हि सम्पूर्णप्रबन्धस्यैव रमणीयत्वहानिर्जायते। रामायणमहाभारतसदृशोपजीव्यग्रन्थात् संगृहीतं कथाशरीरं कविः स्वकीयनवनवोन्मेषशालिन्या प्रतिभया संस्करोति अलङ्करोति वा। कदाचिद् औचित्यापेक्षया रसापेक्षया वा नवकथांशान् उद्भावयति, अनौचित्यप्रवर्तितं परित्यज्यत्वन्यथा वा करोति। इत्थं स्वाभिप्रायप्रकाशने समर्थः कविः सम्पूर्णामपि कथां प्रत्यक्षामिव प्रदर्शयति। एतदेव तथ्यं प्रकरणवक्रताप्रसङ्गे कुन्तकाचार्येण प्रतिपादितम्–

---

1. व. जी. पृ. 37
2. व. जी. पृ. 42
3. व. जी. पृ. 42।

**यत्र निर्यन्त्रणोत्साहपरिस्पन्दोपशोभिनी।**
**व्यावृत्तिर्व्यवहर्तृणां स्वाशयोल्लेखशालिनी॥[1]**

**अव्यामूलादनाशंक्यसमुत्थाने मनोरथे।**
**काप्युन्मीलति निःसीमा सा प्रबन्धांशवक्रता॥[2]**

प्रकरणवक्रतायां कवीनां स्वाशयोल्लेखशालिनी अलौकिकीः प्रवृत्तिः मूलात्प्रभृत्यसम्भाव्यसमुद्भेदे मनोरथे उन्मीलति। यथा रघुवंशमहाकाव्ये रघुकौत्ससंवादे महाकविकालिदासः प्रारम्भादन्तपर्यन्तं स्वकीयं भावमुन्मीलयितुं नितरां क्षमः। विश्वजिति यज्ञे रघुना सम्पूर्णमपि कोषजातं प्रदत्तम्। तस्मिन्नेव समये गुरुदक्षिणार्थी कौत्सस्तत्रागतः। कौत्सस्य रघुं प्रत्यागमनात् कौत्सायाभीष्टधनप्रदानकथां निरूप्य कविना साकेतवासिनां जनानां इमां कथा प्रति भावना प्रदर्शिता। यथा हि-

**शरीरमात्रेण नरेन्द्र!तिष्ठन्नाभासितीर्थप्रतिपादितर्द्धिः।**
**आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवारइवावशिष्टः॥[3]**

**तदन्यतस्तावदनन्यकार्यो गुर्वर्थमाहर्तुमहं यतिष्ये।**
**स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि॥[4]**

**एतावदुक्त्वा प्रतियातुकामं शिष्यं महर्षेर्नृपतिर्निषिध्य।**
**किं वस्तु विद्वन्! गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुङ्क्त॥[5]**

**गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम्।**
**गतो वदान्यान्तरमित्ययं मे मा भूत् परीवादनवावतारः॥[6]**

**तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात्।**
**दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम्॥[7]**

**जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ।**
**गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽकामादधिकप्रदश्च॥[8]**

अस्मिन् प्रकरणे भामहसंमतभाविकालङ्कारस्य लक्षणं घटितं दृश्यते। यतो ह्यत्र चित्रोदात्ताद्भुतार्थत्वं,

---

1. व. जी. 4.1
2. व. जी. 4.2
3. रघु. 5.15
4. रघु. 5.17
5. रघु. 5.18
6. रघु. 5.24
7. रघु. 5.30
8. रघु. 5.31

कथायाः स्वविनीतता, वाचामनाकुलता च सम्यग्रूपेण भाषन्ते। हेतुत्रयलाभात् प्रकरणमिदं भाविकालङ्कारस्य निदर्शनत्वेन सुशोभते। वृत्तौ कुन्तकाचार्यस्य प्रकरणविश्लेषणेन तथ्यमिदं पुष्टं भवति- 'गुरुप्रदेय-दक्षिणातिरिकताप्रतिगृह्णतः कौत्सस्य रघोरपि प्रार्थितशतगुणं सहस्रगुणं वा प्रयच्छतो निरवधिनिः-स्पृहतौदार्यसम्पत्साकेतनिवासिनामाश्रित्यापूर्णं कामपि महोत्सवमुद्रामाततान।'

**दण्डिसम्मतभाविकालङ्कारः कुन्तकप्रोक्ता प्रकरणवक्रता च-** एवमेव दण्डिसम्मतं भाविकमपि प्रकरणवक्रताभेदरूपेणान्तर्भावितम्। कुन्तकेनोक्तम्-

**इतिवृत्तप्रयुक्तेऽपि कथावैचित्र्यवर्त्मनि।**
**उत्पाद्यलवलावण्यादन्या भवतिवक्रता॥[1]**

**तथा, यथा बन्धस्य सकलस्यापि जीवितम्।**
**भाति करणं काष्ठाधिरूढरसनिर्भरम्॥[2]**

इतिहासपरिग्रहेऽपि कथावैचित्र्यमार्गे रमणीयतासम्पदानाय किञ्चिदुत्पाद्यं किञ्चिच्च परित्याज्यं भवति। वृत्तौ कुन्तकेनोक्तम्- उत्पाद्यलवलावण्यादिति द्विधा व्याख्येयम् 'क्वचिदसदेवोत्पाद्यम्, क्वचिदौचित्यत्यक्तं सदप्यन्यथासम्पाद्यं सहृदयहृदयाह्लादनाय।' यथा अभिज्ञानशाकुनतले महाकविकालिदासेन महाभारतस्य नीरसमपि कथानकं स्वकल्पनाप्रसूतोद्भावनाभिः सरसतयोपनिबद्धम्। तत्रापि दुर्वाससः शापप्रकरणमभिज्ञानप्रकरणञ्च विशिष्टमेव महत्वं बिभ्रतः। शकुन्तलया सह गन्धर्वविवाहानन्तरं राजा दुष्यन्तः स्वकीयमङ्गुलीयकं तस्यै प्रदाय राजधानीमागच्छति। कण्वाश्रमे शकुन्तला तमेव स्मरन्ती अभ्यागतस्य दुर्वाससः स्वागतविधिमपि न सम्पादयति येन क्रुद्धो भूत्वा स किमप्यनर्थं कर्तुं तत्परो भवति। यथा-

**विचिन्तयन्ती यमनन्यमानसा,**
**तपोनिधिं वेत्सि न मापस्थितम्।**
**स्मरिष्यति त्वां न स बोधितोऽपि सन्**
**कथां प्रमत्तः प्रथमं कृतामिव॥[3]**

शापमहिम्ना दुष्यन्तः शकुन्तलां विस्मरति। हंसपदिकामुखात् विरहगीतं श्रुत्वा तस्य मनः किमर्थमाकुलमित्यपि स अवगन्तुं न शक्नोति। यथा हि-

**रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्**
**पर्युत्सुकी भवति यत् सुखितोऽपि जन्तुः।**

1. व.जी.-4.3
2. व.जी.-4.4
3. अभि. 4.1

**तच्चेतसा स्मरति नूनमबोधपूर्वं**
**भावस्थिराणि जननान्तरसौहृदानि॥[1]**

अनन्तरं ऋषेः प्रसादात् शकुन्तलायै प्रदत्तमङ्गुलीयकं दृष्ट्वा सर्वं पूर्ववृत्तं तस्य स्मृतिपटले अङ्कितमिव प्रतिभाति। तदा तु वियोगजनितदुःखेन पीडितः स तामेव सततं स्मरति-

**प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं ।**
**बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः॥**

**चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मनः ।**
**संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते॥[2]**

प्रकरणवक्रताया अस्मिन् भेदे दण्डिनोक्तं तथ्यद्वयमन्तर्भावितम्- 'व्यर्थानां विशेषणानामक्रिया' 'स्थानवर्णना' च इति। यदुक्तं तेन तदेव कुन्तकेन 'उत्पाद्यलवलावण्यात्' इति पदेन प्रतिपादितं यतो हि इतिवृत्तेः रमणीयतासम्पादनाय क्वचित् कवेरभिप्रायानुपकारिणां तथ्यानांः क्रियते क्वचिच्च प्रकृतोपयुक्तवर्णनमुत्पाद्यते।

अथ च कुन्तकेन अपरो यः प्रकरणवक्रताप्रकारः प्रतिपादितः तत्र दण्डिनोक्तं 'परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम्' इति तत्त्वमुद्भावितम् यथा हि-

**प्रबन्धस्यैकदेशानां फलबन्धानुबन्धवान्।**
**उपकार्योपकर्तृत्वपरिस्पन्दः परिस्फुरत्॥[3]**

**असामान्यसमुल्लेखप्रतिभाप्रतिभासिनः।**
**सूते नूतनवक्रत्वरहस्यं कस्यचित्कवेः॥[4]**

सार्वत्रिकसन्निवेशशोभिनां प्रबन्धावयवानां प्रधानकार्यसम्बन्धनिबन्धनानुग्राह्यग्राहकभावः स्वभाव-सुभगप्रतिभाप्रकाश्यमानः कस्यचिद् विचक्षणस्य कवेरलौकिकं वक्रतोल्लेखलावण्यं समुल्लासयतीति कुन्तकाचार्यस्याशयः। यथा उत्तररामचरिते गर्भभरखेदितदेहाया सीताया विनोदाय रामेण जृम्भकास्त्राण्युद्दिश्य 'सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति' इति यदभिहितं तत् पञ्चमाङ्के प्रत्यक्षं भवति यदा चन्द्रकेतुना सह युद्धप्रसङ्गे जानकीनन्दनलवो जृम्भकास्त्रप्रयोगेण सैन्यं स्तम्भयति। अत्रेतिवृत्तांशयोः परस्परोपकारित्वं स्पष्टं परिलक्ष्यते।

'उक्तिक्रमबलाद् गम्भीरस्यापि वस्तुनः व्यक्तिरि'ति दण्डिनोक्तभाविकालङ्कारस्यापरं वैशिष्ट्यमस्ति।

---

1. अभि. 5.2
2. अभि. 6.6
3. व.जी. 4.5
4. व.जी. 4.6

उक्तेः क्रमः उक्तिक्रमः अथ च 'गम्भीरं वस्तु' इति। उपदेशरूप रसरूपी वा कवेरभिप्रायसम्बद्धं वैशिष्ट्यमस्ति। 'उक्तेः क्रमः' इतीदं वैशिष्ट्यं सन्धिसन्ध्यङ्गानां प्रयोगबलादेव सम्भवति। अवएव एतेषां प्रयोगेण इतिवृत्तेः लावण्यसम्पादनपूर्वकं गभीराभिप्रायप्रदर्शनमेवाभिप्रेतम्। एतदपि कुन्तकाचार्येण प्रकरणवक्रताप्रकारेणाभिहितम् यथा-

**मुखादिसन्धिसन्धायि संविधानकबन्धुरम्।**
**पूर्वोत्तरादिसाङ्गत्यादङ्गानां विनिवेशनम्॥**[1]

**न त्वमार्गग्रहग्रस्तग्रहकाण्डकदर्थितम्।**
**वक्रतोल्लेखलावण्यमुल्लासयति नूतनम्॥**[2]

प्रबन्धेषु पूर्वप्रकरणैः सह अपरप्रकरणानां साङ्गत्यं वस्तुतः उक्तिक्रम एवास्ति एतेनैव कवेरभिप्रायरूपगम्भीरवस्तुनः प्रकाशनं सम्भवति। स चाभिप्रायः सहृदयानां चेतसि चमत्कारं जनयति अथ च विधिनिषेधात्मकधर्मोपदेशरूपोऽपि भवति।

**निष्कर्षः**- भरताचार्यकृतनाट्यशास्त्रानन्तरं काव्यशास्त्रीयो ग्रन्थः भामहविरचितकाव्यालङ्कार एवोपलभ्यते अथवा केषाञ्चित् विदुषां मते दण्डिकृतकाव्यादर्शः। अनेन आचार्यद्वयेन स्वीकृतं यत् काव्यशोभाकराः धर्मा अलङ्काराः सन्ति। केचित् शब्दानलङ्कुर्वन्ति अन्ये चार्थान्। अथ च एतैरनुभूतं यदेवंविधमपि किञ्चित् वैशिष्ट्यं काव्ये समुपलभ्यते यत् सम्पूर्णेऽपि काव्ये काव्यस्य प्रकरणेषु च न प्राप्यते चेत् तदा कवेरभिप्रायः तत्र न दृश्यते/काव्यञ्च कवेरभिप्रायरूपम् एव भवति। अतएव प्रबन्धालङ्काररूपेण एताभ्यां भाविकालङ्कारो निरूपितः। वक्रोक्तिजीवितकारस्य सम्मुखं ग्रन्थद्वयम् आसीत्। एतयोरभिप्रायं सम्यक्तया हृदयङ्गमं कृत्वा एतेन शब्दार्थयोर्वैशिष्ट्यतया प्रकरणवक्रतात्वेन च अस्यातलङ्कारस्य वैशिष्ट्यान्यन्तर्भूतानि अथ च एतेषां वैशिष्ट्यानां व्याख्यानमपि विशदतया कृतम्।

---

1. व.जी. 4.14
2. व.जी. 4.15

# योगवेदान्तयोः समाधिनिरूपणम्

डॉ. दीपककुमारद्विवेदी

**समाधिः**-व्युत्थानसंस्कारस्याभिभवे निरोधसंस्कारस्य च प्रादुर्भावे सति ध्येयस्वरूपे चित्तस्य निश्चलतयाऽवस्थानमर्थात् चित्तस्यैकाग्रतापरिणामः सिद्ध्यति, अयमेव परिणामः समाधिरित्युच्यते।[1] समाधिविषये महर्षिणा पतञ्जलिना योगसूत्रे प्रोक्तम्- **'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः'**।[2]

**सविकल्पकसमाधिः**-सविकल्पकसमाधिसन्दर्भे वेदान्तसारकारेणेत्थमुच्यते- समाधिर्द्विविधस्स-विकल्पको निर्विकल्पकश्चेति। तत्र सविकल्पको नाम ज्ञातृज्ञानादिविकल्पलयाऽनपेक्षयाद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरवस्थानम्।[3] तदा मृण्मयगजादिभानेऽपि मृदानवद् द्वैतभानेऽप्यद्वैतं वस्तु भासते। तदुक्तम्-

**दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम्।**
**अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्तमोम्।।**[4]

तत्र तयोस्सविकल्पकनिर्विकल्पकयोर्मध्ये सविकल्पकोऽपि द्विविधः। 'अहं ब्रह्मास्मीति' शब्दानुविद्धतयाऽद्वितीये वस्तुनि चित्तवृत्तेः स्थितिरित्येकस्सविकल्पको विद्यते। द्वितीयस्तु सविकल्पको ज्ञातृज्ञानज्ञेयेति त्रिपुटभेदभानपूर्वकमहं ब्रह्मास्मीति तदाकाराकारितायाः चित्तवृत्तेरद्वितीयवस्तुन्यवस्थानम्। ननु समस्तभेदनिरसनपुरःसरमद्वैतवस्तुमात्रभानार्थमेव उक्तसमाध्योः प्रवर्तनम्, परं तदवस्थायामपि ज्ञानादिभेदभानेऽद्वैतवस्तुसिद्ध्यभावः, तदा समाधेः क उपयोगः? इति भक्षितेऽपि लशुने न शान्तो व्याधिरित्याशङ्क्योत्तरमेवमाह। तदा- सविकल्पकसमाध्यनुभवकाले ज्ञात्रादिभेदभानस्य वाचारम्भण-मात्रत्वादद्वैतमेव वस्तु भासते, यथा मृण्मयगजादिभानेऽपि मृद्भानं भवति, तद्वदवगन्तव्यमत्रापि।

**निर्विकल्पकसमाधिः**-**''निर्विकल्पकस्तु ज्ञातृज्ञानादिविकल्पलयापेक्षयाद्वितीयवस्तुनि तदाकाराकारितायाश्चितवृत्तेरतितरामेकीभावेनावस्थानम्''**[5] इति परिभाषयति वेदान्तसारकर्त्ता सदानन्दः।

---

1. वेदान्तसारव्याख्या पृ.246
2. योगसूत्रम् 3//3
3. वेदान्तसार पृ.244
4. तत्रैव
5. वेदान्तसारः पृ.248

अयञ्च निर्विकल्पकसमाधिर्द्विविधः– चिरकालाभ्यस्तश्रवणाद्युत्तरसविकल्पकसमाधेरनुभवजनिसंस्कारसह-कृतायाश्चित्तवृत्तेर्ज्ञात्रादित्रिपुटीलयपूर्वकमद्वैते वस्तुन्येकभावनारूपः प्रथमः। एतन्निर्विकल्पक-समाधेरभ्यासपाटवेन लुप्तसंस्कारतया ज्ञात्रादित्रिपुटीलयपूर्वकमखण्डाकाराकारितायाश्चित्तवृत्तेः, विनापि स्वस्फूर्ति केवलचिदानन्दात्मनाऽवस्थानात्मको द्वितीयः। अत्र ज्ञातृज्ञानज्ञेयभेदभावभानस्याभाव इत्याद्वितीयवस्तुनि तदाकाराकारितचित्तवृत्तेरत्यन्तमेकीभावेनावस्थानम्। अर्थात् दीर्घतराभ्यासवशादस्मिन् समाधौ संस्कारा नश्यन्तीति ज्ञातृज्ञानज्ञेयभेदभावलोपेनास्मिन् समाधावद्वितीयवस्त्वाकाराकारितचित्तवृत्तिरपि न पृथगवभासते, अपित्वद्वितीयवस्तुमात्रमेवावभासते। यथा जलाकाराकारितलवणस्य न पृथगवभासोऽपितु जलमात्रस्यैवावभासस्तद्वदवगंन्तव्यमत्रापीत्यर्थः।[1] पञ्चदशीकारेण निर्विकल्पकसमाधेरस्य योगदर्शनस्य धर्ममेघसमाधिना सहातीवसुन्दररोचकरीत्या वर्णनं प्रदर्शितं–

> **अनादाविह संसारे सञ्चिताः कर्मकोटयः।**
> **अनेन विलयं यान्ति शुद्धो धर्मो विवर्धते॥**
>
> **धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः।**
> **वर्षत्येष यतो धर्मामृतधाराः सहस्रशः॥**[2]

**निर्विकल्पकसमाधेरङ्गानि**

अस्याङ्गानि **''यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः''**।[3] इमानि निर्विकल्पकसमाधेरङ्गानि पातञ्जलयोगसूत्रे 'योगाङ्गानी'त्यपरनाम्ना प्रसिद्धानि। एवं योगसूत्रस्याधारेण वक्तुं शक्यते, यत् योगदर्शनस्य साधनप्रक्रियाऽद्वैतवेदान्तेऽपि यथातथ्येन स्वीकार्याऽस्ति।

**यमः**– योगदर्शने यममधिकृत्य महर्षिपतञ्जलिना प्रोच्यते– 'अहिंसा सत्याऽस्तेयब्रह्मचर्यापरिग्रहा यमाः' इति।[4] यम्यते ह्याचारो जीवनं वा यैस्ते यमा इति व्युत्पत्या जीवनस्य ते सदाचारसिद्धान्ता यमपदेनाऽभिधीयन्ते येऽहिंसादयो जीवनं व्यवस्थापयितुमुपयोगितां भजन्ते। विषयेऽस्मिन् मनुना साधु प्रोक्तम्–

> **यमान् सेवेत सततन्न नियमान्केवलान्बुधः।**
> **यमान्पतत्यकुर्वाणो नियमान्केवलम्भजत्॥**[5]

यमानां संख्याविषये विविधेष्वाचार्येषु वैमत्यन्दृश्यते। तैस्तैराचार्यैः स्वीकृतासु संख्यासु कस्य व्रतस्योपव्रतस्य वा गणना यमेषु कर्तव्याऽत्र विषयेऽप्याचार्याणां वैमत्यं परिस्फुरति । वेदान्तेऽपि योगसम्मताः पञ्च यमाः स्वीकृताः।

1. सारबोधिनी.पृ.161
2. पञ्चदशी 1/59-60
3. योगसूत्रम्
4. योगसूत्रम् 2/30
5. मनुस्मृतिः 2/30

**अहिंसा–'वाङ्मनः कायैः परपीडावर्जनमहिसा'** इत्येवमहिंसां परिभाषयति विद्वन्मनोरञ्जनीकारः।[1] पतञ्जलिना स्वीकृतेषु यमेष्वहिंसा प्रथमतया स्वीकृता वर्तते। अहिंसायाः परिभाषा यद्यपि तेन कुत्रापि नैव विहितास्ति, तथाऽपि अहिंसाप्रतिष्ठाफलतया वैरत्यागः स्वीकृतः। पतञ्जलिमते वैरमूला भावना वैरमूलाः क्रियाश्च हिंसात्वेनाभिमतास्सन्ति।

**सत्यम्**–यमेषु सत्यस्य निरुपमं स्थानं विद्यते। व्यासभाष्ये सत्यस्य स्वरूपं इत्थं दृश्यते ''सत्यं यथार्थे वाङ्मनसे, यथादृष्टं यथानुमितं यथाश्रुतं तथा वाङ्मनश्चेति। परत्र स्वबोधसंक्रान्तये वागुक्ता, सा यदि न वञ्चिता भ्रान्ता वा प्रतिपत्तिबन्ध्या वा भवेदिति। एषा सर्वभूतोपकारार्थं प्रवृत्ता, न भूतोपघाताय यदि चैवमप्यभिधीयमाना भूतोपघातपरैव स्यान्न सत्यं भवेत् पापमेव भवेत्। तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टतमं प्राप्नुयात्। तस्मात्परीक्ष्य सर्वभूतहितं ब्रूयात्।[2] क्रमेऽस्मिन् स्मृतेरिदं वचनं नितरां मार्मिकं विद्यते।

**सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्।**
**प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः।।**[3]

**अस्तेयम्**–विद्वन्मनोरञ्जनीकारेण ''अस्तेयमदत्तादानरूपपरस्वहरणराहित्यम्''[4] इत्युच्यते। भगवता पतञ्जलिनाऽस्तेयस्य व्याख्यानं विहितम्। भाष्यकारो व्यास इतरे च टीकाकारा इमं पदं बहुधा व्याख्यायन्ति। एतेषां मते शास्त्रव्यवस्थानुसारं परकीयस्य द्रव्यस्य स्वीकाराभावोऽस्तेयं भवति।

**ब्रह्मचर्यम्**–विद्वन्मनोरञ्जनीव्याख्यायामष्टाङ्गमैथुनस्य परित्याग एव ब्रह्मचर्य प्रोक्तम्, यथोच्यते ''ब्रह्मचर्यमष्टाङ्गमैथुनवर्जनम्''।[5] अष्टाङ्गमैथुनस्य चर्चा तावदित्थं कृता–

**ब्रह्मचर्यं सदा रक्षेदष्टधालक्षणं पृथक्।**
**स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।।**

**सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च।**
**एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।**
**विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्।।**[6]

**अपरिग्रहः**–विश्वस्य विषयाणामुपभोगेऽनेकदोषा दृष्टा भवन्ति। विषयाऽसक्तिः अतिशयकष्ट–कारिका भवति, विद्वन्मनोरञ्जनीकारेणेत्थमुच्यते– 'समाध्यनुष्ठानानुपयुक्तस्य वस्तुमात्रस्यासंग्रहोऽपरि–

1. वेदान्तसारस्य विमला व्याख्या पृ.251
2. व्यासभाष्यम् 2/30
3. वेदान्तसारस्य विमला व्याख्या पृ.253
4. तत्रैव पृ. 251
5. तत्रैव
6. दक्षसंहिता अ.7

ग्रहः"[1]। विषयाणामर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणमपरिग्रहः इति योगभाष्ये व्यासो निर्दिशति।

**नियमः**

योगाङ्गेषु नियमो द्वितीयमङ्गं विद्यते। पतञ्जलिना शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमा[2] इत्युक्तम्। नियमवर्गे स्वीकृतास्वेतासु शौचादिषु अहिंसादिप्रसिद्धान् यमानपेक्ष्य क्रियायाः प्राधान्यं न दृश्यतेऽर्थादहिंसादिषु यमेषु केषाञ्चिन्मनोभावानाङ्कर्मणां वा परिहारो प्राधान्येनोपलभ्यते। नियमेषु तु कर्मेन्द्रियैः मनसा वा सम्भवानां क्रियाणामेव प्राधान्येन परिग्रहोऽस्ति। अत एव भगवता पतञ्जलिनाऽपि तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगतया स्वीकृतानि सन्ति।

**आसनम्**– योगाङ्गेषु आसनं तृतीयमङ्गं विद्यते। आस्यतेऽनेन, आस्यतेऽत्र वाऽऽसनम्, हस्तपदाद्यवयवानां विशेषस्थितौ स्थिरमवस्थापनमेवासनम्। करचरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्तिकादीन्यासानानीति स्पष्टं दिशति वेदान्तसारकारः।[3] आचार्यशङ्करस्य विषयेऽस्मिन्नेवं निर्देशो लभ्यते–

**सुखेनैव भवेद् यस्मिन्नजस्रं ब्रह्मचिन्तनम्।**
**आसनं तद्विजानीयान्नेतरत्सुखनाशम्॥[4]**

**'स्थिरसुखमासनम्'**[5] इति पतञ्जलिना प्रोक्तम्। करचरणादिसंस्थानसंयोजनस्य यस्मिन् प्रक्रमे साधकः स्थिरं सत् सुखमनुभवितुं क्षमो भवति अर्थादवयवसंस्थानसंयोजनेन निष्कम्पस्तिष्ठति तदेव वस्तुतः तस्य कृते सिद्धमासनमिति सूत्रतात्पर्यं तावदाञ्जस्येनाभिधातुं शक्यम्।

**प्राणायामः**

रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः।[6] एषां भेदचतुष्टयानां क्रमशः उल्लेखे सति प्राणायामस्य परिभाषा खल्वेवं सुस्पष्टा जायते–

**निष्क्राम्य नासाविवरादशेषं प्राणं बहिः शून्यमिवानिलेन।**
**निरुध्य सन्तिष्ठति रुद्धवायुः स रेचको नाम महानिरोधः॥**

**बाह्येस्थितं घ्राणपुटेन वायुमाकृष्य तेनैव शनैः समन्तात्।**
**नाडीश्च सर्वाः परिपूरयेद् यः स पूरको नाम महानिरोधः॥**

---

1. वेदान्तसारस्य विमला व्याख्या पृ.252
2. योगसूत्रम् 2/32
3. अपरोक्षानुभूतिः श्लो.11 वे.सा.व्या.पृ.257
4. योगसूत्रम् 2/46
5. वेदान्तसारः पृ.251
6. तत्रैव

**न रेचको नैव च पूरकोऽत्र नासापुटे संस्थितमेव वायुम्।**
**सुनिश्चलं धारयति क्रमेण कुम्भाख्यमेतत्प्रवदन्ति तज्ज्ञाः॥[1]**

प्राणो नाम परमात्मनो विश्वव्यापिनी जीवनशक्तिः। अयं समष्टिगतः प्राणः। अस्यैवांशो व्यष्टिगतः प्राणो भवति। प्राणेन जीवनशक्तेर्देहस्य समस्तेन्द्रियाणाञ्च संचारो भवति। शरीरे प्राणस्पन्दनं प्राणेन भवति।

**प्रत्याहारः**-ध्यानकाले स्व-स्वविषयादसम्बद्धानाम् इन्द्रियाणामन्तःकरणस्वरूपस्यानुकरणमेव प्रत्याहारः।[2] ''स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः'' इति प्रोक्तं महर्षिणा पतञ्जलिना योगसूत्रे।[3] अस्यामवस्थायां चक्षुरादीनीन्द्रियाणि स्व-स्वविषयान् रूपादीन् परित्यजन्ति। यत् प्रभावाच्च चित्तं स्व-स्वरूप एव तिष्ठति। फलतोऽस्यामवस्थायामिन्द्रियाणि चित्तस्वरूपानुकारीणि भवन्ति।[4] अस्यामवस्थायां चित्तनिरोधाऽतिरिक्तं नान्यत् किमपि कर्त्तव्यं भवति। चित्तनिरोधे सति चित्तवन्निरुद्धानि सर्वाण्यपीन्द्रियाणि नेतरेन्द्रियजयवदुपायान्तरमपेक्षमाणानि तथैव निरुद्धानि भवन्ति, यथा मधुकरराजं मक्षिका उत्पतन्तमुनुत्पतन्ति निविशमानमनुनिविशन्त इत्येवं चित्तस्वरूपानुकरणमेव प्रत्याहारो मतः।[5] योगभाष्यकारो व्यासो केषाञ्चिन्मतानुरोधेन शब्दादिष्वव्यसनमेवेन्द्रियजयो मनुते। एतेषां मते शास्त्रप्रतिपादितानां शास्त्रेष्वप्रतिनिषिद्धानां विषयाणां भोगोऽपि प्रत्याहारपदार्थतया ग्रहीतव्यो भवति। केषाञ्चिन्मताधारेण रागद्वेषाऽभावे सुख-दुःखशून्यं शब्दादिविषयकज्ञानमपीन्द्रियजय इति प्रतिपाद्यते।[6]

**धारणा**

यत्र-यत्र मनो गच्छति तत्र-तत्र ब्रह्मण एव दर्शनं तस्मिन् ब्रह्मण्येव च मनसः समाधानं सर्वोत्तमा धारणा प्रोक्ता। यथोच्यते-

**यत्र यत्र मनो याति ब्रह्मणस्तत्र दर्शनात्।**
**मनसो धारणं चैव धारणा सा परा मता॥[7]**

अष्टाङ्गयोगस्य षष्ठमङ्गं धारणा विद्यते। धारणाध्यानसमाधिरिति त्रयमेव सम्प्रज्ञातसमाधेरन्तरङ्गमुच्यते। तत्र धारणात् चित्तस्यैकाग्रतायाः प्रक्रिया प्रारभ्यते। समाधिरूपे महाप्रासादे प्रवेशाय धारणा मुख्यं द्वारम्। महर्षिणा पतञ्जलिना योगसूत्रे ''देशबन्धश्चित्तस्य धारणा'' इत्येवं सूत्रयित्वा धारणाया लक्षणं प्रतिपादितम्।

---

1. तत्रैव पृ.258
2. वेदान्तसारव्याख्या पृ.259
3. योगसूत्रम् 2/54
4. भोजवृतिः 2/54
5. व्यासभाष्यम् 2/54
6. व्यासभाष्यम् 2/55
7. वेदान्तसारव्याख्या पृ.259 अपरोक्षानुभूतिः श्लो.122

**ध्यानम्**-अष्टाङ्गयोगस्य सप्तमाङ्गं ध्यानं विद्यते। योगदर्शने 'तत्र प्रत्ययैकतानता ध्यानम्''[1] इति सूत्रे ध्यानस्य लक्षणं दर्शितम्। धारणाया देशविशेषस्यैकस्यैव विषयस्य वस्तुन आलम्बनस्य वा नैरन्तरर्येण ज्ञानं तैलधारावदविच्छिन्नप्रवाहरूपेण यदा परामृष्टं न भवति तदैतदेव ध्यानमिति वक्तुं शक्यते। योगशास्त्रेषु प्रायशो ध्यानशब्दस्य प्रयोगः समाध्यर्थे क्रियते। परन्तु ध्यानसमाध्योः अन्तरङ्गावस्थाभेदश्च नियतो भवति। ध्यानं यदा पूर्णता पुष्टं दृढं वा जायते तदा समाधिरूपेण परिणतो भवति। योगसूत्रे वर्णितं ध्यानमेव वेदान्तसारे सविकल्पकसमाधि रूपेणावबोध्यत इति प्रतीयते। ध्यानस्य परिपक्वास्था एव सविकल्पकसमाधिरिति बोध्यम्। वेदान्तसारे ध्यानस्याद्यावस्थास्वरूपं वर्णितमस्ति, योगसूत्रे तावत् तस्य परिपक्वावस्था निर्दिष्टास्तीति विशेषतोऽवधेयम्।[2] शङ्कराचार्येण विषयेऽस्मिन् प्रोक्तम्-

**ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः।**
**ध्यानशब्देन विख्याता परमानन्ददायिनी॥**[3]

**समाधिः**-यमादिना सह यः समाधिरङ्गत्वेनाभ्युपगतः स सविकल्पकसमाधिरस्ति। सविकल्पक-निर्विकल्पभेदेन समाधिर्द्विधेति पूर्वं निर्दिष्टम्। तयोर्मध्ये सविकल्पकसमाधौ अखण्डवस्तुनो भानेन सह अन्यवस्तुनोऽपि भानं भवति, परं निर्विकल्पसमाधौ कस्यापि विकल्पस्यान्यवस्तुनो वा भानं न भवति। अत एवात्र निर्विकल्पकसमाधिरङ्गीति मन्यते। तथा च सविकल्पकसमाधिः यमादिरिव तस्य निर्विकल्पकसमाधेरङ्गं विद्यते। आचार्यबदरीनाथशुक्लमहोदयैर्वेदान्तयोगसम्मतयोस्समाधिस्वरूपस्याद्वितीयं व्याख्यानमेवमेव युक्तियुक्तं सहजतया बोधगम्यञ्च विहितमिति न्यायवेदान्तानुशीलनमतीनामतिरोहितमेवेति सर्वमवदातम्।

---

1. योगसूत्रम्
2. वेदान्तसारव्याख्या पृ.259
3. अपरोक्षानुभूतिः श्लो.123

# अपवर्गस्वरूपम्

डॉ. सियंका द्विवेदी

अपवर्गस्यार्थो मोक्षः, अर्थात् एकविंशतिदुःखानामात्यन्तिकी निवृत्तिः।[1] निवृत्तेः आत्यन्तिकता-दुःखपूर्वत्वाभाव एव। एकविंशतिदुःखेषु मुख्यं दुःखं तु स्वभावतः दुःखमस्ति। परमिन्द्रियाणि, विषयाः, विषयानुभवाः शरीरञ्च तस्य साधनत्वात् दुःखानि मन्यन्ते। एवं सुखं यत् जीवमात्रस्यात्यन्तं काम्यं तस्य लाभार्थमेव मानवः सर्वाणि कार्याणि करोति। सुखं दुःखं विना न प्राप्यते। तर्कभाषायां केशवमिश्रेण स पुनरपवर्गः कथं भवतीति जिज्ञासामुद्भाव्य[2] स्वयमेव तस्य समाधानमपि लिख्यते-यदपवर्गस्य प्राप्त्यर्थ प्रथमं कर्तव्यं शास्त्रस्य यथोचितमध्ययनम्।

शास्त्रस्याध्ययनेन सम्पूर्णपदार्थानां तत्त्वज्ञानं प्राप्तं भविष्यति। पदार्थानां तत्त्वज्ञाने सति सांसारिकविषयेषु दोषा अर्थात् दुःखानुविद्धताया दर्शनं भविष्यति। विषयेषु दोषदर्शनात् तेभ्यो विरक्तिर्भविष्यति। विषयेभ्यो वैराग्ये सति मुक्त्यर्थमिच्छा जायते। फलतो मानवस्य, विषयाणां चिन्तनमकृत्वा स्वात्मनो यथार्थस्वरूपस्य चिन्तने प्रवृत्तिर्भविष्यति। अनया प्रवृत्त्या पुनः शास्त्रस्याध्ययने मानवः प्रवर्तते। योगशास्त्रे वर्णितरीत्या चिरकालपर्यन्तं चिन्तनस्यानुवर्तने सति तस्य पुष्टिर्भविष्यति। चिन्तनस्य परिपाकोऽर्थात् चिन्तनस्य पूर्णलाभो भवति अर्थादात्मनः स्वरूपसाक्षात्कारो जायते, आत्मनः साक्षात्कारेणाऽविद्याऽस्मिता-रागद्वेषाभिनिवेशरूपपञ्चविधक्लेशानां, न्यायशास्त्रे रागद्वेषमोहरूपेण निर्दिष्टानां त्रिविधदोषाणां निवृत्तिर्भविष्यति। एषां दोषाणां निवृत्तौ सति मानवो यत् किञ्चिद् कर्म करिष्यति तन्निष्कामभावेनैव करिष्यति। निष्कामभावेऽनुष्ठितकर्मभ्यो नूतनधर्माधर्मकर्मणोःसञ्चयो न भवति अस्यां स्थितौ तेन मानवेन केवलं पूर्वजन्मस्वर्जितधर्माधर्माभ्यामेव निवृत्त्यर्थं चिन्ता विधेया। तत् सुखमपि दुःखानुसङ्गात् दुःखसहभावित्वाद् वा दुःखस्वरूपमेवेति तत्त्वविदामाकूतं सुखे दुःखानुषक्तता च दुःखाविनाभाव इत्यपि वक्तुं शक्यते।

फलतो वर्तमानस्य शरीरस्य सम्बन्धविच्छेदात्, धर्माधर्मरूपकारणानामभावे सति नूतनशरीरस्याप्राप्तेः शरीराद्येकविंशतिप्रकारकदुःखानामात्यन्तिकी हानिर्भविष्यति। सम्पूर्णदुःखानामेतादृशी आत्यन्तिकी निवृत्तिरेवापवर्गः। सखेपेणाऽपवर्गप्राप्तेरयं विधिरस्ति।

अपवर्गप्राप्तेरस्यां प्रक्रियायां यौगिकचमत्काराणामनिवार्यतास्ति। यदि मुमुक्षुव्यक्तेर्योगसाधना महती न भवेत् एवं तेन योगः पूर्णतया न साधितः तर्हि स पूर्वेष्वसंख्यजन्मस्वर्जितकर्मराशिं तथा तस्य

---

1. मोक्षोऽपवर्गः। स चैकविंशतिप्रभेदभिन्नस्य दुःखस्यात्यन्तिकी निवृत्तिः। त.भा.पृ.330
2. त.भा.पृ.331

भोगानुकूलां विविधां योनिञ्च न ज्ञातुं शक्नोति तथा चायं फलभोगार्थ सहैव कायव्यूहस्य रचनामपि न कर्त्तुं पारयति। फलतो योगसाधनां विना मोक्षस्य प्राप्तिः न शक्येति।

संसारेऽस्मिन् मानवः प्रारब्ध-सञ्चित-क्रियमाणकर्मबन्धनैः सम्बद्धोऽस्ति। येषां कर्मणां फलभोगाय अस्य शरीरस्य प्राप्तिर्भवति, यस्य भोगोऽपि प्रारब्ध एवंविधानि कर्माणि प्रारब्धकर्मनाम्ना प्रसिद्धानि। एतेषां कर्मणां नाशो भोगस्य पूर्णतायां निर्भरः। क्रियमाणकर्माणि तानि सन्ति यानि सम्प्रति प्रचलितानि सन्ति। एतेषां कर्मणां संस्कारसञ्चयो भवति। एतेषां कर्मणां भोगस्तु भविष्ये प्राप्यते। अत एवेमानि क्रियमाणकर्माणि कथ्यन्ते। सम्प्रति सावधानेन सञ्चितकर्मणां शैलस्वरूपाणां विखण्डनं कार्यम्। शास्त्रद्वारा आत्मनो यथार्थस्वरूपं विज्ञाय तस्य मननध्यानसाक्षात्कारकरणाय प्रयत्नशीलेन मानवैर्भाव्यम्। एवमेवानवरतप्रयासानन्तरमात्मनस्तात्त्विकस्वरूपस्य साक्षात्कारो मन्यते। आत्मसाक्षात्कारात् पूर्वजन्मार्जितानन्तकर्मणां समूहः क्षणान्तरमेव भस्मीभूतो भविष्यति। गीतायामुक्तमपि-

**ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन।**[1]

मोक्षार्थं संसारत्यागस्य योगसाधनस्य सन्न्यासधारणस्यावावश्यकता नाऽपेक्षिता। मोक्षाय अस्याः प्रक्रियाया अधोनिर्दिष्टाया अनुसर्ता मनुष्यो गृहस्थस्य सामान्यं जीवनं निर्वहन्नपि मुक्तो भवति। यथोच्यते-

**न्यायागतधनस्तत्त्वज्ञान- निष्ठोऽतिथिप्रियः।**
**श्राद्धकृत् सत्यवादी च गृहस्थोऽपि विमुच्यते।।**[2]

किन्तु तर्कभाषाकारेणोपर्युक्तप्रक्रियायाः चर्चा विधाय पूर्ववर्णितप्रक्रियाया एव चर्चा विहिता। अत एव पूर्वप्रक्रिया मोक्षस्य राजमार्गोऽस्ति।[3] इमां प्रक्रियामेव दृष्टिगतां कृत्वा श्रीकृष्णेन गीतायामुच्यते-

**बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।**[4] इति।

**मोक्षस्य शास्त्रान्तरसम्मतं स्वरूपम्**

**अद्वैतवेदान्ते मोक्षः**

अद्वैतवेदान्तस्य दृष्टौ अनिर्वचनीयाया त्रिगुणात्मिकाया जगतः परिणाम्युपादानरूपाया अविद्याया निवृत्त्योपलक्षितं सच्चिदानन्दस्वरूपं ब्रह्मैव मोक्षः।[5] शङ्कराचार्येणाऽत्मनः स्वयाथार्थरूपेऽवस्थानं मोक्ष

---

1. त.भा.व्या.पृ 332
2. त.भा.व्या.पृ.333
3. तत्रैव
4. तत्रैव
5. तत्रैव

इत्युच्यते **'स्वात्मन्यवस्थानं मोक्षः'**।[1] तात्पर्यमिदमस्ति- आत्मा निर्विकारः, नित्यः, आकाश इव विभु, अपरिवर्तनीयः, अविभक्तः सर्वसन्तोषप्रदः, स्वयं ज्योतिःस्वभावः, अप्रभविष्णुः, निरवयवः, सर्वव्यापी चास्ति। सर्वक्रियारहितः कालत्रयप्रभावेणावच्छिन्नः अशरीरी अयमात्मा मुक्त इति कथ्यते।[2] आत्मनोऽथवा ब्रह्मणः सरलानुभूतिरेव मोक्षः। ब्रह्म मोक्षश्च एकस्या एव शाखायाः द्वे पुष्पे स्तः। ब्रह्म यो जानाति स स्वयमेव ब्रह्मास्ति- **'ब्रह्मविद् ब्रह्मैव'** भवतीति श्रुतिदर्शनात्।[3]

एवमविद्याया निवृत्तिरेव मोक्षः। स ब्रह्मणः प्राप्तिः। मोक्षोऽविद्यानिवृत्तिश्चैकैवास्ति ''अविद्यापगममात्रत्वात् ब्रह्मप्राप्तिफलस्य''।[4] अविद्याया नाशे सति मोक्षस्वरूपस्य फलस्योत्पत्तिर्भवति फलञ्च मोक्षोऽविद्यानिवृत्तिर्वा[5] इति श्रुतेः। मोक्षः न तु ज्ञानकर्मणा प्राप्यते न ज्ञानकर्मसमुच्चयेन। शङ्कराचार्येण अस्य विरोधः कुर्वतोच्यते- कर्मणा सम्पादिताः सम्पूर्णा अपि पदार्था अनित्याः तद्विपरीता मोक्षावस्था नित्या, ''न हि क्रियानिवृत्तोऽर्थो नित्यो दृष्टः नित्यश्च मोक्षोऽभ्युगम्यते''[6] एवं मिथ्याप्रतीतेः निराकरणं विधाय ब्रह्मवेत्ता सशरीरजीवितोऽपि 'स्वयमशरीरी'त्यनुभवं करोति ''तस्मान्मिथ्याप्रत्ययनिमित्तत्वात् सशरीरत्वस्य, सिद्धं जीवितोऽपि विदुषोऽशरीरस्य''।[7] इदमशरीरं सुखदुःखस्पर्शं न कुरुतः-''अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः''।[8] तथा तत्शरीरं अमृतं ब्रह्म एवास्ति- ''अथायमशरीरोऽमृतः ब्रह्मैव''[9]। सत्यस्यामृतस्य दर्शनान्तरं अज्ञानस्वरूपोऽन्धकारः नाशमेति। यथा भागवतमहापुराणे महर्षिव्यासेन प्रोच्यते।

**देहञ्च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत् स्वरूपम्।**
**दैवादपेतमुत दैववशादुपेतं वासो यथा परिकृतं मदिरामदान्धः॥**[10]

अत एव जीवब्रह्मणोरैकतायाः ज्ञानानन्तरमेव ब्रह्मणः साक्षात्कारो भवति। जीवन्मुक्तपुरुषस्य हृदयग्रन्थेः उद्घाटनं स्वयमेव भवति, अत एव प्रोक्तम्-

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥**[11]

1. तैत्ति. उप.शां.भा.1/11
2. ब्र.सू.शां.भा.1/1/41
3. मुण्ड.उप.शा.भा.3/2/9
4. बृह. उप. शा.भा.1/4/10
5. तत्रैव 1/4/11
6. ब्र.सू.शां.भा. 4/4/6
7. तत्रैव 1/1/4
8. छान्द. उप. 8/12/1
9. बृह. उप.4/4/7
10. श्रीमदा.पु. 11-13-36
11. मु.उप.2/2/8

**मीमांसादर्शने मोक्षः**- मतेऽस्मिन् ''नित्यसुखस्याभिव्यक्तिरेव मोक्ष'' यो वेदविहितकर्मणां श्रद्धापूर्वकविधिवदनुष्ठानेन साध्योऽस्ति।[1] कर्मसिद्धान्तो मीमांसायाः प्रमुखो विषयः। धर्मज्ञानस्याधारो वेद इति कथ्यते ''वेदाधर्मो हि निर्बभौ''। मीमांसादर्शने यादृशं सर्वोच्चस्थानं धर्मेणाधिगतम् तत्स्थानं परवर्तिकाले मोक्षेणाधिकृतम्। मीमांसादर्शने आत्मनः सांसारिकत्रिविधबन्धनेभ्यो मुक्तिरेव मोक्षः यथा- ''त्रिविधस्यापि बन्धनस्यात्यन्तिको विलयो मोक्षः।[2] प्रभाकराचार्येण मोक्षस्य परिभाषेत्थं निर्दिष्टा- ''आत्यन्तिकस्तु देहोच्छेदो निःशेषधर्माधर्मपरिक्षयनिबन्धनो मोक्षः''।[3] मीमांसका महत्त्वपूर्णविषयस्य मोक्षस्य विवेचनम् अतिसूक्ष्मदृष्ट्या कृतवन्तः। अनेन संसारेण सह आत्मनः सम्बन्धस्य विलय एव तैर्मोक्षः कथितः ''प्रपञ्चसम्बन्धविलयो मोक्षः''।[4] पार्थसारथिमिश्रस्य कथनमस्ति यत् कुमारिलसम्मतमोक्षे प्रपञ्चसम्बन्धस्य अर्थात् देहेन्द्रिय-विषयसम्बन्धस्य चात्यन्तिकविलयकारणात् ज्ञानमानन्दश्च न सम्भवतः, किन्तु सन्दर्भेऽस्मिन् नारायणभट्टस्य कथनमस्ति यत् कुमारिलमते केवलं सुखस्याभावो भवति, परमात्मनः स्वरूपस्याऽविर्भावादात्मसुखस्योपभोगः तिष्ठत्येव। यथा-

**दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्त्तिनः।**
**सुखस्य मनसा भुक्तिर्मुक्तिरूपा कुमारिलैः॥**[5]

एतेन स्पष्टं यत् कुमारिलः कर्मज्ञानसमुच्चयवादस्य पोषकः। स उपासनाध्यानयोरधिकबलं ददाति। मोक्षे कर्मणो महत्त्वपूर्णयोगदानमस्ति। कर्मोपासनयोः च यथार्थज्ञानस्याविर्भावे सहायकत्वं स्वीक्रियते। याभ्यां मोक्षप्राप्तिर्भवति। कुमारिलो मीमांसाशास्त्रस्य गम्भीराध्येतासीत्। आत्मज्ञानं सुदृढं कर्त्तुं वेदान्तस्य मननश्रवण-निदिध्यासनानां प्रयोगेऽत्यधिकं बलमनेन प्रदत्तमुक्तञ्च-

**दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन।**[6]

**सांख्यदर्शने मोक्षः**- सांख्यदर्शनमते पुरुषस्वरूपविषयकमज्ञानमेव बन्धनं ज्ञानञ्च मोक्षोऽस्ति। अस्माकं संसारिकजीवनं दुःखमयम्। एतेषां दुःखानां त्रयो वर्गाः सन्ति-आध्यात्मिकाधिभौतिकाधिदैविकभेदात्। एषामत्यन्ताभावो मोक्षः। सांख्यशास्त्रप्रणेत्रा महर्षिकपिलेन प्रोच्यते- **''अथ त्रिविध दुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः''**[7] एवं सांख्यकारिकाकारेण ईश्वरकृष्णेन सांख्यकारिकायाः प्रथमाकारिकायां लिख्यते-

---

1. त.भा.व्या.पृ.333
2. शा.दी.पृ.56
3. प्रक.पञ्चि.पृ123
4. भा.द. पृ.511
5. मा.मे. पृ.24
6. श्लो.वा. पृ.134
7. सां.सू. 1/1

**दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ।**
**दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात्।।[1]**

तत्त्वाभ्यासेन यदा यथार्थज्ञानं सुदृढं भवति निर्विकल्पकज्ञानञ्च व्यक्तिनिष्ठं सत् व्यक्तेरनुभवस्वरूपतां प्राप्नोति, तदा एतदेव विशुद्धचैतन्यस्य स्वरूपं प्रोच्यते। इयं स्वरूपस्थितिरेव कैवल्यं, मोक्षो वा कथ्यते-

**एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।**
**अविपर्ययाद् विशुद्धं केवलमुत्पद्यते ज्ञानम्।।[2]**

सांख्यदर्शने जीवन्मुक्तिविदेहमुक्तिभेदेन द्विविधा मुक्तिः स्वीक्रियते। प्रारब्धकर्मवशात् सदेहपुरुषः सम्यक् ज्ञानमवाप्य मुक्तो भवति। इयं जीवन्मुक्तिरवस्था भवति। अस्यां स्थितौ देहस्तु तिष्ठति परं देहस्य सम्बन्धनाशो भवति। एतादृशः पुरुषः कर्मणो बन्धनाद् निर्मुक्तो भवति। यथा-

**सम्यग्ज्ञानाधिगमात् धर्मादीनामकारणप्राप्तौ।**
**तिष्ठति संस्कारवशात् चक्रभ्रमिवद् धृतशरीरः।।[3]**

अत्र पुरुषस्तु बन्धनमोक्षाभ्यां रहितः। स संसारचक्रे न पतति नापि मुक्तस्तिष्ठति समग्रमिदं कर्म प्रकृतेरस्ति इयं प्रकृतिरेव या लिङ्गशरीररूपेण नानापुरुषैः सम्बद्धा बन्धनं गमनं मोक्षञ्चाधि गच्छति।

**तस्मान्न बध्यते न मुच्यते नापि संसरति कश्चित्।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः।।[4]**

प्रकृतिः स्वभिन्नरूपाणां प्रदर्शनं कृत्वा स्वकार्यात् विरक्ता भवति, अर्थात् सृष्टिव्यापारस्य पिधानं करोति-

**रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।**
**पुरुषस्य तथाऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः।।[5]**

जीवो यदा स्वसात्विकस्वरूपस्य ज्ञानमधिगच्छति तदा तस्य शरीरसम्बन्धः सर्वकालाय विच्छिन्नो भवति। यथा-

---

1. सां. का. 1
2. सां.का.64
3. सां.का.67
4. सां.का.62
5. सां.का. 59

**धर्मेण गमनमूर्ध्वं गमनमधस्ताद् भवत्यधर्मेण।**
**ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः॥**[1]

**योगदर्शने मोक्षः**- योगदर्शने मोक्षः कैवल्यं नाम्ना प्राप्यते। कैवल्यस्यार्थ एकाकी अर्थात् स्वस्वरूपे एव विद्यमानत्वम्। यदात्मदर्शनरूपज्ञानेनाविद्यायाः सर्वथाऽभावो भवति तदाऽज्ञानजनितसंयोगस्यापि स्वतोऽभावः सिद्ध्यति, पुनः पुरुषस्य प्रकृत्या सह कश्चिद् सम्बन्धो न तिष्ठत्येवं तस्य जन्ममरणादिसम्पूर्णदुःखानां सर्वथाऽत्यन्ताभावो भवति। योगदर्शने महर्षिपतञ्जलिना उच्यते- **''तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम्''।**[2]

1. तत्रैव का.44
2. यो.द. 2/25

# सृष्टिविमर्शः

**श्रीमतिः सुरभिशर्मा**

अस्मिन् खलु संसारे प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते इदमप्स्यामि इदं हास्यामीति किञ्चिद् वा प्रयोजनं भवति न तावदीश्वरस्य किञ्चिद् वा प्रयोजनं भवति न तावदीश्वरस्य किञ्चिद् हेयमस्ति दुःखाभावात् नोपादेयं पूर्णकामात् पुनः खलु कथं विनिर्मितेयं सृष्टिः खलु ईश्वरेण। अत्र खलु केचिद् वदन्ति क्रीडार्थमीश्वरः सृष्टिं करोतीति तदपलापमेव। क्रीडानां विना क्रीडया रतिमविन्दतां रत्यर्थं भवति। न च रत्यर्थी भगवान् दुःखाभावाद् दुःखिनो हि सुखोपभोगार्थं क्रीडन्ति यद्येवं तर्हि विभूतिख्यापनार्थं सृजति सृष्ट्या हि विश्वरूपत्वं ख्यापितं भवतीति केचिदाहुः तदप्ययुक्तम्। न हि विभूतिख्यापनेन किञ्चिद् हीयते पुनः किमर्थं खलु ईश्वरः सृष्टिं सृजतीति चेच्छृणु यथा भूम्यादयः धारणादिक्रियां स्वभावतः कुर्वन्ति तथेश्वरोऽपि स्वभावतः प्रवर्तते प्रवृत्तिस्वभावकत्वादीश्वरस्येति न कोऽपि दोषः। तथाचोक्तम्-

**न तस्य कार्यं कारणञ्च विद्यते न ततः समश्चाभ्यधिकश्च दृश्यते।**
**परास्या शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥**[1]

**न्यायवैशेषिकमनुसृत्यसृष्टिविमर्शः-** नैयायिकाः तथा वैशेषिकाः पृथिवी जलतेजोवायू-[2] नाञ्चतुर्णान्द्रव्याणां परमाणून् प्रलयकालेऽपि स्थिराणि मन्यन्ते। यतो ह्येतानि नित्यानि। आकाशकालदिगात्ममनांसि पञ्चद्रव्याणि तु नित्यानि सन्त्येव। अत एतान्यपि प्रलयकाले सर्वदा एव तिष्ठन्ति। अस्यार्थोऽयमभवद् यत्प्रलये एतेषाम्मतानुसारेण पृथिव्यादिनवद्रव्याणि विद्यमानानि सन्ति। आकाशकालादीनि तु पूर्णरूपेण तत्र सन्ति तथा पृथिव्यादीनि चत्वारि अन्यानि द्रव्याणि निजसूक्ष्मरूपेण परमाणुत्वेन वर्तमानानि। अत एवैतेषामत्र प्रलयानन्तरं सर्गे काऽपि बाधा भवितुन्न शक्यते।

जगदनाद्यनन्तम्। ब्रह्मणो मानानुसारेण यस्मिन् काले वर्तमानब्रह्मणश्शतं वर्षाणि निर्गच्छन्ति तर्हि तस्मै मोक्षाभिलाषा जायते- एतेभ्यस्सर्वेभ्यः प्रपञ्चेभ्यो दूरङ्गन्तव्यम्। जगदिदमनाद्यनन्तञ्च। अस्य चेतनाचेतनजगतः कतिवारं रचनाभवल्लयश्चेति न ज्ञायते। इदम्भूयोभूयः प्रवाहात्मकरूपेण संसरति। अतः कालान्तरेऽस्मादनादेजगतो मुक्तिं लब्धुमभिलाषा ब्रह्मणोऽपि भवति।[3]

---

1 श्वे. उ. 3/7/8

2 भारतीय दर्शन, डॉ. बद्रीनाथ सिंह- डॉ. आशा सिंह

3 शब्दगुणकमाकाशम्, तर्कभाषा, पं. बदरीनाथ शुक्ल, पृ. 268

जीवानाम्भोगसम्पादनाय महेश्वरस्य सृष्टिङ्कर्तुमिच्छोत्पद्यते। जीवानां सर्वेष्वदृष्टेषु कार्याणि उत्पादयितुङ्क्षमताऽऽयाति। यद्यपि ईश्वरस्याऽसंख्य-कार्याणामुत्पत्तौ व्यापृतेच्छा तस्य क्रियाशक्तेः स्वरूपम्। एवन्दिगादिपदार्थानामिव नित्यत्वादेकैवास्ति, तथापि तत्तत्कालरूपं सहकारिणं लब्ध्वा सैव कदाचित् संहारकारणम्। यदा सा सृष्टेः कारणन्तदा जीवानामदृष्टकार्यक्षमाः निजनिजकार्याणि प्रति च व्यापारशीला भवन्ति। यदेश्वरेच्छा संहारात्मिका जायते तदानीमीश्वरः कार्याणि प्रति उदासीनतामावहति।

**वेदान्तदर्शनमनुसृत्य सृष्टिः**- वेदान्तः सृष्टिप्रक्रियाविषयेऽतीव सूक्ष्मस्तथा जटिलः। अस्यास्सृष्टिप्रक्रियास्सम्बन्धे श्रुतिरेकं सामान्यमभिमतम्प्रकटयति। सा कथयति- यथा जीवितमनुष्यस्य शरीरे केशा नखादयः समुत्पद्यन्ते तथैवाक्षरब्रह्मणो जगदुत्पत्तिः। शंकराचार्यो जगदुत्पत्तेः किमपि विशेषं प्रयोजनन्नाकथयत्। अस्मिन् सम्बन्धे सोऽकथयद् यज्जगतः कारणत्वादप्यीश्वरः केवलं लीलायै स्वभावतः प्रयोजनं विना तथैव सृष्टिङ्करोति, यथा मनुष्यशरीरे किमपि बहिः प्रयोजनं विनाणि श्वासप्रश्वासाश्चलन्त्येव।[1]

ब्रह्मनित्यमपरिणामि कूटस्थञ्चैतन्यञ्च। तस्य स्थूलानि सूक्ष्माणि च यानि स्वरूपाणि भवन्ति। एतानि सूक्ष्मस्थूलरूपाणि कर्माणि मायाया स्वरूपाणि सन्ति। अत एव सूक्ष्मात् प्रभृति आस्थूलं यः परिणामो विकारो वा दृश्यते सोऽचेतनमायायाः मिथ्याविस्तारो न तु चैतन्यस्य। इयमव्यक्ता सृष्टिशक्तिर्माया पूर्वं सूक्ष्मविषयाणां रूपे त्यक्ता भवति तदा च स्थूलविषयाणां रूपन्धारयति। माया त्रिगुणात्मिकाभिहिता, सत्वरजस्तमांसि एते त्रयोगुणाः सततं परिणामिनः। एतेषु यदा रजोगुणप्राधान्यम्भवतिस्तदा मायाया विक्षेपशक्त्या चैतन्यब्रह्मण आकाशः सम्भवति आकाशाद् वायुर्वायोरग्निरग्नेरः[2] अद्भ्यः पृथिवीति क्रमेणोत्पत्तिर्भवति। एतेषूत्पन्नभूतेषु त्रयो गुणा निजनिजकारवादनिजनिजकार्ये[3] आगच्छन्ति। एतानि पञ्चमहाभूतानि वेदान्ते सूक्ष्मभूतानि तन्मात्राणि वा अपञ्चीकृतभूतानि कथितानि। एतेभ्यस्सूक्ष्मभूतेभ्यस्सूक्ष्मशरीराणां स्थूलभूतानाञ्चो-त्पत्तिरभवत्।

**पञ्चज्ञानेन्द्रियाणामुत्पत्तिः**-व्याप्यतेजोवाय्वाकाशभूतेषु प्रत्येकमपि गुणत्रयम्। यदेतेषु पृथक्पृथक्सात्विकांशस्य प्राधान्यं तदा पृथक्पृथग्व्यष्टिरूपेणेन्द्रियाणि प्रोच्यन्ते। महाप्रलयानन्तरं यदा सर्वा सृष्टिर्विलीयते तानीम्पुनः ब्रह्माखण्डरूपेण स्थीयते।

**इयं सृष्टिरीश्वरस्यैवापररूपम्**-सर्वाणि शास्त्राण्यस्मिन् विषये एकमतानि यदीश्वरेण रचितास्सृष्टयास्सर्वेपदार्थावास्तविकतायान्तस्यैव रूपाणि 'बहुस्यां प्रजायेत' अर्थादहं स्वात्मानमनेकरूपेषु प्रकटीकुर्याम्। एतस्यां श्रुतो ईश्वर एतन्नाकथयद्यद-हमुत्पन्नङ्कुर्याम्। अपित्वेतदकथयदयदहम्भवेयम्।

---

1. कोलवत्तु लीलाकैवल्यम्- 2/1.33
   यथा चोच्छवासप्रश्वासादयो नभिसंधाय ब्राह्य किञ्चिल्प्रयोजनं स्वभावादेव संभवति, एवमीश्वरस्याप्यनपेक्ष्य किञ्चित्प्रयोजनान्तरं स्वभावादेव केवलं लीलारूपा प्रवृर्त्ति भविष्यति। ब्रह्मसूत्र, शाङ्करभाष्यम्।
2. 
3.

अनया श्रुतये तत्स्पष्टम्भवति यदिदं सर्वं दृश्यं महाप्रपञ्चशरीरेन्द्रियमनादिविभिन्नोपाधिस्वरूपात्मकं परमात्मनोभिव्यक्तिरस्ति। ततौ भिन्नभैव।

आचार्यशंकरेणापि मनुष्यस्य श्वासप्रश्वासवदीश्वरेणास्यास्सृष्टेरुत्पत्तिरभिहिता। आशयोऽमेतदन्यस्यां श्रुतौ कथितम् पूर्वङ्केवलं सदेवासीद् अन्यङ्किञ्चिदपि नासीत्। तदनन्तरं सृष्टेः समारम्भो भवत्सो नैकथा जातः। तृतीयां श्रुतौ कथितं यदीश्वरस्स्वयं व्यक्तमव्यक्तञ्जगदभवत्।

अद्वैतसिद्धान्तोऽयम्। एतस्यानुसारेण सृष्टेरर्थः कस्यचिन्नवपदार्थस्यो-त्पत्तिनैवापित्वत्यक्तो व्यक्तो भवति। सृष्टेरर्थो आभ्यान्तरवस्तुनो प्रकटीकरणम्। इदमाभ्यान्तरं वस्तु कथमाविर्भवति, अस्मिन् सम्बन्धे वेदान्ते एकमुदाहरणन्दत्वा कथितम्- यथा लूता निजशरीरेण पाशं रचयति पुनश्च स्वात्मन्येव संकलयति, तथैवाक्षरपुरुषोऽपि सृष्टिकाले जगद् अभिव्यनक्तिसर्गान्ते च पुनस्तत्स्वात्मनि लीयते।

**यथोर्णनाभिः सृजते गृह्यते च यथा पृथिव्यामोषधयः सम्भवन्ति।**
**यथा सतः पुरुषात् केशलोमोनि तथा क्षरात् सम्भवतीह विश्वम्॥**[1]

**सांख्ययोगदर्शनमनुसृत्य सृष्टिः**-प्रकृतेरियमाकङ्क्षका भवति यत्कश्चिद् मामवलोकयेदतः प्रकृतिर्दृश्या भोग्या च। दृश्यम्भोग्यं वस्तु भोक्तुं कस्यचिद् द्रष्टुर्भोक्तुर्वा आवश्यकता भवति, स द्रष्टापुरुषोऽस्ति। इत्थमेव पुरुषस्स्वगतदुःखत्रयेणाभिमानी भवति। येन प्रकृत्या सह स्वात्वानुभूतिपारवश्यात् पीडितस्स कैवल्यकामनाङ्करोति। कैवल्यप्राप्तिः प्रकृतिपुरुषयोर्भेदज्ञानं विना भवितुन्नार्हति। अतः पुरुषः प्रधानस्यापेक्षाङ्करोति एतयोः संयोगः संयोगः पङ्ग्वन्धवद् वर्तते। क्रियारहितः पुरुषः पङ्गुरचेतनत्वाच्च प्रकृतिर्नेत्रविहीना।

यथान्धस्कन्धमारुह्य पङ्गुः स्वाभीष्टं स्थानमधिगच्छति अन्धश्च पङ्गुनेत्रनिर्दिष्ट यथा तेन सहैव स्वेष्टं स्थानम् तथापि जिज्ञासेयम्भवति। एतयोर्द्वयोः संयोगे सत्यपि महदादेः सृष्टिः कस्मात् कारणादभूत्? अस्योत्तरमिदं सृष्टिः प्रकृतिपुरुषयोः संयोगाद् भवति। यतो हि महदादेः सृष्टिं विना भोगस्य कैवल्यस्य वा उत्पत्तिर्न भवितुं शक्नोति। उभयोः संयोग एव महदादेः सृष्टेः कारणम्।

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः॥**[2]

अयं संयोगो महदादिसृष्टिं विना पुरुषस्य भोगाय कैवल्याय च समर्थो भवितुन्नार्हति। अतः प्रकृतिपुरुषयोः संयोग एव भोगापवर्गाय सृष्टिङ्करोति। सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारात्[3] पञ्चतन्मात्राणि एकादशेन्द्रियाणि च। पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि प्रादुर्भूतानि।

---

1. मुण्डक. 1/1/7
2. सांख्यकारिका 21
3. एकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्। पातञ्जलयोगदर्शनम्- 2/18

कथनस्याभिप्रायश्शब्दतन्मात्रतश्शब्दगुणिन आकाशस्योत्पत्तिः। शब्दतन्मात्र-सहितात् स्पर्शतन्मात्राद्वायोरुत्पत्तिः। यस्य गुणश्शब्दस्स्पर्शश्चास्ति। रूपतन्मात्रत-श्शब्दस्पर्शमात्राभ्यां सहयोगेन तेजस उत्पत्तिर्भवति। यस्मिन् शब्दस्पर्शरूपगुणा विद्यन्ते। रसतन्मात्रतश्शब्दस्पर्शरूपतन्मात्राणां सहयोगेन जलमुत्पद्यते। यस्मिन् शब्दस्पर्शरूपरसगुणाः विद्यन्ते। गन्धतन्मात्रतश्शब्दस्पर्शरूपरसतन्मात्राणां सहयोगेन पृथिवी जायते। यस्यां शब्दस्पर्शरूपरसगन्धागुणा विद्यमानाः। एतेषाम्पञ्चभूतानां शब्दस्पर्शरूपरसगन्धा एते क्रमेण पञ्चविशिष्टविषयाः। परं सहैव पूर्वभूतानाङ्गुणा अपि एतेषु समाविष्टाः।

**प्रकृतेर्महाँस्ततोऽङ्कारस्तस्माद् गणश्च षोडशकः।**
**तस्मादपि षोडशकात्पञ्चभ्यः पञ्चभूतानि॥**[1]

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः। प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्राण्युभयमिन्द्रियम्मनः तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः।[2]

**लिङ्गशरीरम्**-लिङ्गशरीरं सर्वप्रथमं सृष्टेः समारम्भकाल एवोत्पद्यते। इदं सूक्ष्मशरीरं प्रकृत्या प्रतिपुरुषमेकमेकं निर्मीयते तथेदमसक्तं शिलायामपि गमनशीलं नियतसृष्टेरारभ्य महाप्रलयपर्यन्तन्नैरन्तर्येण तिष्ठति। अस्य स्वरूपं महत्तत्त्वमहङ्कार-एकादशेन्द्रियाणि पञ्चतन्मात्राणि चेत्थमष्टादशावयवानां समुदाय एव सूक्ष्मशरीरमिदम्।

**पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्।**
**संसरति निरूपभोगं भावैरधिवासितं लिङ्गम्॥**[3]

**चार्वाकदर्शनमनुसृत्य सृष्टिविमर्शः-**

चार्वाकाणान्तत्वमीमांसा स्वप्रकारस्यैकमद्भुतं वस्त्वस्ति। चार्वाकेन पृथिवी-जल-तेजो वाय्वादीनि चत्वारि भूतान्येव स्वीकृतानि। बौद्धानामिव चार्वाकाणामपि मतमासीद् यदावरणाभावकारणादाकाशं शून्यमेवास्ति। नास्ति कश्चित्सत्तात्मकः पदार्थः। एते चत्वारः पदार्थाः स्वविकारावस्थाया जगतो मूलकारणानि बाह्यजगदिन्द्रियाणि तथा भौतिकशरीराण्येतैश्चतुर्भिर्मूलभूतैरुत्पद्यन्ते परमस्योत्पत्तिः कथम्भवतीति प्रश्नस्य?

समाधानाच्चार्वाकास्सदा विरता आसन्। ते सम्बन्धमेनमवबोधयन् दृष्टादृष्टकारणानां साक्षान्निषेधकारणेन तथास्य जगतः कस्याचिच्चेतनस्यान्तर्यामिनस्सत्तायाः विकृत्यभावपारवश्याद् विश्वमेतच्चार्वाकाणान्दृष्ट्याकस्मात् सम्मिलितशीलस्य भूतचतुष्ट्यस्यैकं संग्रहमात्रम्। तैरुक्तं वर्ततेयथामधुशर्करादिषु[4] मादकशक्तिर्नैवभवति, परन्तेषां विकृत्यवस्थायां मदशक्तिरूपजायते, तथैव पृथिव्यादिचतुर्षु पदार्थेषु

---

1. सांख्यकारिका- 22
2. सांख्यसूत्रम्- 1.61
3. महाः व. 29/17
4. तत्र पृथिव्यादीनि।

चैतन्याभावेऽपि देहादिकारेण विकृतौ चैतन्यमुपजायते। वक्तुरभिप्रायो जड़पदार्थानां विकारेण चैतन्यन्तथैवोपजायते यथा ताम्बूलपूगचूर्णानां योगादाग उपजायते।

**स्वभाववाद**:-चार्वाकोऽनुमानप्रमाणन्न स्वीकरोति। अनुमानवादी चेद् धूम्रवहने कार्यकारणभावम्मत्वा तेषां साहचर्यन्न्यायसंगतं स्वीकुर्यात्तथापि चार्वाकोव्याप्ति- म्मन्तुन्न तत्परः। तस्य दृष्टौ जगति कार्यकारणभावाय किमपि स्थानन्नास्ति।

संसारस्य विचित्रता कार्यकारणभावस्य विचित्रतया नास्ति। प्रत्युत् स्वभावकारणादस्ति सुखिनञ्जनमवलोक्य धर्मस्य कल्पना तथा दुःखिनम्मनुष्यमवलोक्याधर्मस्य कल्पना न्यायसंगता नैवा प्रतीयते। सुखस्य कारणन्न न तु धर्मस्तथा दुखस्य कारणन्नाधर्मः। मनुष्यस्स्वभावेनैव दुःखी सुखी वा। अग्निर्दाहयति जलञ्च स्पर्शे शीतलम्भवति, तत् सर्वम् स्वाभाविकम्, तत्र वस्तुनस्स्वभाव एव कारणम्। मयूरा विभिन्नवर्णाः केनोत्पादिताः पिकस्य वाणी केन मधुरा कृता। एतस्य कारणं स्वभावादतिरिक्तं न किमपि भवितुमर्हति।

चार्वाकस्य सिद्धान्तस्स्वभाववादनाम्ना दार्शनिकजगति एव विख्यातम्। ते जगत उत्पत्तेर्विनाशस्य मूलकारणं स्वभावेमवस्वीकुर्वन्ति। वस्तुनः स्वभावजगतो विचित्रतायाः कारणमस्त्येतदतिरिक्तम् न किमपि।

**अपरे लोकायतिकाः स्वभावं जगतः कारणमाहुः।**
**स्वभावादेव जगत् विचित्रमुत्पद्यते, स्वभावतो विलयं याति॥**[1]

1. भट्टोत्पल- बृहत्संहिता 1/7 टीका

# निपातार्थविचारः

डॉ॰ रामनारायणद्विवेदी

## निपातानां द्योतकत्वम्[1]

अनुभूयते सुखं, साक्षात्क्रियते गुरुरित्यादौ अनु साक्षात् इत्यादिनिपाताः द्योतकाः। अनुभव-साक्षात्कारेत्यादिफलानां धात्वर्थत्वम्। एवञ्च फलव्यधिकरणव्यापारवाचकत्वरूपं सकर्मकत्वं धातोर्निर्वहति। कर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वमिति स्वीकारेऽपि फलाश्रयतया कर्मसंज्ञकस्य धात्र्वथफले एवान्वयौचित्येन धात्वर्थफलद्योतकत्मेव निपातानामावश्यकम्। द्योतकत्वं समभिव्याहृतशब्दनिष्ठवृत्त्युद्बोधकत्वम्। क्वचित्तु क्रियाविशेपाक्षेपकत्वं तत्। यथा प्रादेशं विलिखतीत्यादौ। विः विमानक्रियाक्षेपकः। इत एव प्रादेशमिति कर्मणि द्वितीया। प्रादेशं विमाय लिखतीत्यर्थः। क्वचित्तु सम्बन्धपरिच्छेदकत्वं द्योतकत्वम्। यथा कर्मप्रवचनीयानाम्।

अथ शब्दानुशासनम् इत्यत्राथशब्दस्य प्रारम्भक्रियाक्षेपकत्वं कैयटादावुक्तम्। वस्तुतस्तु अत्र अथशब्दो वाचक एव। अधिकृतमिति तदर्थ इत्युद्योते। लोके अनुभू इति समुदायदेवार्थप्रतीत्या अनुविशिष्टस्यैव धातुत्वमिति तु नाशङ्कनीयम्, विशिष्टस्य धातुगणे पाताभावात्। विशिष्टस्य धातुत्वे अडागमादीनां विशिष्टात् पूर्वं प्रवृत्तिः स्यात्। यथा अन्वभवत् इत्यादौ।

## वाचाकत्ववादिमतखण्डनम्–

एतेन निपातानां द्योतकत्वसमर्थनेन वाचकत्ववादिनैयायिकमतमपास्तम्। नैयायिका हि[2] उपसर्गाः द्योतकाः। तदितरनिपाता वाचकाः। "साक्षात् प्रत्यक्षतुल्ययोः" इति कोशात्। नमः पदे नमस्कारार्थकत्वस्य लोकसिद्धत्वाच्च। सकर्मकत्वं च स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वम्। स्वं-धातुः कर्मत्वमपि, स्वस्वयुक्तनिपातान्यतरार्थफलाश्रयत्वमिति न कर्मणि लकारानुपपत्तिरित्याहुः। वैयाकरणेम्भस्तन्मतं न रोचते उपसर्गाणां द्योतकत्वं निपातानां वाचकत्वमिति वैषम्ये बीजाभावात्, अनुभूयत इत्यस्य साक्षात्क्रियत इत्यनेन समत्वात्, कर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वमिति निष्कृष्टमते द्योतकत्वं विना गत्यसम्भवाच्च। कर्मसंज्ञकः तण्डुलादिः तदन्वयी विक्लित्यादिः तदर्थकत्वं पचेः। तद्वत् साक्षात्क्रियते गुरुः, इत्यादावपि कर्मसंज्ञकः गुर्वादिः, तदन्वयी साक्षात्कारः, तदर्थकत्वं कृञादेरेव, न

---

1. ल. म. पृ. 584
2. वै. सि. परमलघुमञ्जूषा-निपातार्थ.

तु साक्षादित्यादिनिपातस्य।

अपि च "लः कर्मणि च भावे चाकर्मकेभ्यः"[1] इति सूत्रे कर्मशब्देन स्वस्वयुक्तनिपातान्यतरार्थफलाश्रयत्वेन रूपेण कर्मबोधस्य दुर्लभता। अन्यतरत्वस्य अतिगुरुत्वेन तद्घदितकर्मत्वस्य दुर्ज्ञेयता। तद्भिन्नत्वे सति तद्भिन्नो यः तद्भिन्नत्वं तदन्यतरत्वम्। तस्य भेदघटितत्वेन गुरुत्वम्, तद्भिन्नत्वे सति तद्भिन्नानां सवेषां ज्ञानासंभवेन तद्भिन्नत्वस्य दुर्ज्ञानत्वम्।

यत्तु उपसर्गो द्योतकः उपसर्गत्वात् इत्यनुमानेन **नैयायिकेन** उपसर्गाणां द्योतकत्वसाधने-निपातानामपि निपातत्वेन हेतुना वाचकत्वाभावसाधानं कृतं, नन्न युक्तम्, प्रमाणानां सामान्ये पक्षपातात्। अत्र शक्तिसम्बन्धेन निपातपदवत्वम् अखण्डं वा निपातत्वं पक्षतावच्छेदकमिति। तन्न निपातत्वापेक्षयापि सामान्यो यो धर्मः अव्ययत्वं, तदवच्छेदेन वाचकत्वाभावसिद्ध्ययापत्तेः, न चेष्टापत्तिः, स्वराद्यव्ययानां स्वातन्त्र्येण प्रयोगानापत्तेः।

अपि च निपातत्वं द्योतकत्वग्रहेऽवच्छेदकमिति न युक्तम्। तत्तदर्थनिरुपितद्योतकत्वस्य तत्तन्निपातवृत्तितया तद्वृत्त्यसाधारणधर्मस्यावच्छेदकत्वमावश्यकमिति सामान्यधर्मस्य अवच्छेदकत्वे मानाभावाच्च। व्याप्यरूपेणावच्छेदकत्वे व्यापकरूपेण नावच्छेदकत्वमिति न्यायात्।

अपि च निपातत्वाग्रहेऽपि बोधात् न निपातत्वं द्योतकतावच्छेदकम्। यदपि निपातानां वाचकत्वे शोभनः समुच्चय इति वत् शोभनश्च इत्यस्यापत्तिः[2], 'घटस्य समुच्चय' इत्यस्य स्थाने 'घटस्य च' इत्यस्याप्यापत्तिरिति, तन्न, शब्दशक्तिस्वभावेन नित्यपरतन्त्रतया निपातैः स्वार्थस्य विशेषणत्वेनैव बोधेन तत्र विशेषणानां शोभनादीनामन्वयाप्रसङ्गात्, पदार्थः पार्थेनान्वेति न तु तदेकदेशेनेति व्युत्पत्तेः।

षष्ठ्यापत्तिरपि न, घटं पटं चेत्यादौ घटम् इत्यस्य क्रियायामेवान्वयः। अत एव ततो द्वितीया। घटसमुच्चयवन्तं पटं पश्येति बोधः। तत्र समुच्चयस्य प्रतियोग्यपेक्षायां सन्निहितत्वात् घटस्य प्रतियोगित्वम्।

पटे तु समुच्चयस्य भेदेनान्वयः, न तु पटसमुच्चये इति षष्ठ्यापादानम्। नामार्थयोर-भेदान्वयव्युत्पत्तिस्तु निपातातिरिक्तविषया। वस्तुतोऽव्ययेषु नामत्वमेव नेति। यद्वा समुच्चितः चार्थः। अतो न षष्ठ्यादिप्रसक्तिः, न च समुच्चिताभिधाने सत्त्वार्थकतया द्रव्यवाचित्वात् निपातत्वाभावेऽनव्ययतया ततः सुपः श्रवणापत्तिरिति वाच्यम्। शब्दशक्तिस्वभात् चाद्युपस्थाप्यस्यासत्त्वभूतत्वात्। तदुक्तम् "समुच्चिताभिधाने च व्यतिरेको न विद्यते" इति। व्यतिरेकः-समुच्चयस्य पृथगुपरिस्थितिरित्यर्थः। धर्म्यंशे समुच्चिते शक्तिकल्पनागौरवं प्रामाणिकत्वान्न दोषाय।

**उपसर्गाणां द्योकत्वम्–**

एतावता एतदुक्तं भवति उपसर्गाणां द्योतकत्वमेव। तदनुसारेण सर्वेषां निपातानां द्योतकत्वकथनं न युक्तम्। किं तु केषाञ्चिन्निपातानां द्योतकत्वम्, केषाञ्चित् वाचकत्वम्। तत्राप्येकस्यैव निपातस्य कार्यवशेन वाचकत्वं द्योतकत्वमपीत्येव युक्तम्। सर्वेषां निपातानां वाचकत्वमिति नैयायिकोक्तं तु न

1. पा. सू. 3/4/19
2. वै. भूषणसार:-निपातार्थ.

युक्तम् इति।

निपातानामर्थवत्त्वमपि द्योत्यार्थमादायैव। शक्तिलक्षणाद्योतकतान्यतमसम्बन्धेन बोधकत्वस्यैव अर्थवत्वस्वरूपत्वात्। नञ्समासे उत्तरपदार्थप्राधान्यमपि द्योत्यार्थमादयैव। प्रतिष्ठतीत्यत्र तिष्ठतिरेव गतिवाचि धातूनामनेकार्थत्वात्। प्रशब्दस्तु तदर्थकत्वस्यैव, तद्गतादित्वस्य च बोधक इति भूवादिसूत्रे भाष्ये स्पष्टम्। तत्र हि- क्रियावचनो धातोरिति वार्तिकखण्डनावसरे तिष्ठतिरेव व्रजिक्रियाया निवृत्तिरिति भाष्ये उक्तम्।

यद्यपि लोके विशिष्टादेव विशिष्टबोध इति विशिष्ट एव क्रियावाची, तथाप्यडादिव्यवस्थार्थं धातूपसर्गयोः पृथक्कल्पनम्। अत एवान्तरङ्ग उपसर्गयोगः। अत एव उपास्यते गुरुरिति कर्मणि लकारः। एतन्मूलक एव "पूर्वं धातुरुपसर्गेण युज्यते" इति प्रवादः। अन्यथा केवलस्य आस्धातोरकर्मकतया उपास्यते इत्यत्र कर्मणि लकारो न स्यात्। बाह्यश्च साधनयोगः- कर्तृकर्मादिसाधनवाचकप्रत्यययोगः। अत एव संचस्कारेत्यादौ पूर्वं सुट्। ततः साधनप्रयुक्तकार्यम्, न चैवमध्ययनमित्याद्यसिद्धिः। तत्र पूर्वम् इष्धातोः उपसर्गयोगे सर्वणदीर्घे ततो ल्युटि गुणायोदेशयोः अधयनमित्यापत्तेरिति वाच्यम्।

"णेरध्यने वृत्तम्"[1] "प्रत्यय"[2] इत्यादिनिर्देशेन क्वचित् प्रत्ययनिमित्तककार्यात् प्राक् उपसर्ग-निमित्तककार्याप्रवृतेर्ज्ञापानात्। एतन्मूलकमेव पठ्यते "पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति" इति नव्याः दीक्षितादयः।

**निपातद्योतकत्वविषये नागेशमतम्-**

वस्तुतस्तु "सुट् कात्पूर्वः"[3] "गतिर्गतौ" इत्यत्र भाष्ये उक्तम्-धातूपसर्गयोः कार्यमन्तरङ्गम्। कुत एतत् पूर्वं हि धातुरुपसर्गेण युज्यते पश्चात् साधनेन इति उपसर्गेण- उपसर्गसंज्ञकेन, साधनेन-तत्प्रयुक्तकार्येणेति तदर्थः। "इतर आहुः नैतत् सारं पूर्वं हि धातुः साधनेन युज्यते पश्चादुपसर्गेण। साधनं हि क्रियां निवर्तयति विशिनष्ठीति" साधनेनतत्प्रयुक्तकार्येण, हि यतः साधनं क्रियां निवर्तयति। साध्यत्ववैशिष्ट्येन बोधयति। अतः पूर्वं तत् प्रयुक्तकार्यमिति भावः। तदुक्तं भूवादिसूत्रे कैयटेन- "साधनसम्बन्धादवसीयमानसाध्यरूपा" इति। निश्चीयमानः-साध्यतेत्यर्थः। तां=तेन रूपेण बुद्धाम्, उपसर्गः-तत्संज्ञकः शब्दः। विशिनष्टि=स्वद्योत्यविशेषणवैशिष्ट्येन बोधयति। साध्यत्वेन ज्ञानं विना क्रियायोगे विहितोपसर्गसंज्ञकैः शब्दैः योगज्ञानादिति तदर्थः।[4] क्रियायोगश्च क्रियाविशेषणीभूतार्थद्योतकत्वमेव।

इतर आह-सत्यमेवमेतत्, यस्त्वसौ धातूपसर्गयोरभिसम्बन्धः, तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते, पश्चादुपसर्गेणेति तस्य आस्यते गुरुणेत्यकर्मकः उपास्यते गुरुरिति केन सकर्मकः स्यादिति।

एवमेतत्=पूर्वं साधनेन युज्यत इति युक्तम्, तत्सत्यमेव। तत्सम्बन्धं विना साध्यत्वेन प्रतीतेरपर्यवसानात्। कथं तर्हि उपसर्गकार्यस्यान्तरङ्गत्वम्, तत्राहु-यस्त्वसाविति। यस्तव

1. पा. सू. 7/2/26
2. पा. सू. 3/1/1
3. पा. सू. 6/11/35
4. पा. सू. 8/1/70

धातूपसर्गसम्बन्धकृतत्वेनाभिमतोऽर्थः तमुपसर्गसंज्ञकसम्बन्धमन्तरेणापि धातुरभ्यन्तरं कृत्वा अर्थत्वेनाङ्गीकृत्य साधनेन युज्यते इत्यर्थः।

अयं भावः–वक्ता धातोरेव विशिष्टमर्थं बुद्धौ कृत्वा साधनसम्बन्धकार्यप्रत्ययभोगेन तत्र साध्यत्वावगतौ श्रोतृबोधाय क्रियायोगनिमित्तकोपसर्गसंज्ञकशब्दयोगं करोति। अन्यथा केवलधातुतः सर्वत्र अप्रतीयमानतया श्रोतुः तद्बोधो न स्यादिति, तदुक्तं "भूवादयः"[1] इति सूत्रे कैयटेन–अनेकार्थत्वात् धातूनां विशिष्टोऽर्थो धातोरेव। उपसर्गस्तु बोद्धारं प्रति तदर्थद्योतक इति।

एवं च पूर्वमुपसर्गयोगो नाम तदर्थसम्बन्धः। ततः उपसर्गयोगात् पूर्वं साधनकार्ययोगः, ततश्च उपसर्गशब्दयोग इति परिभाषाद्वयार्थः। तदुक्तं हरिणा–

**धातोः साधनयोगस्य भाविनश्च क्रमाद्यथा।**
**धातुत्वं कर्मभावश्च्च तथान्यदपि दृश्यताम्॥**
**बुद्धिस्थादिभिसम्बन्धात्तथा धातूपसर्गयोः।**
**अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते॥**[2]

अस्यार्थः–यथा भाविसाधनसम्बन्धाश्रयेण क्रियावाचित्वमाश्रित्य धातुसंज्ञोच्यते यथा च भावीषिकर्मत्वमाश्रित्य उपक्रमे एवेषिकर्मत्वमुक्तं तथा भाव्युपसर्गसम्भवादुपक्रम एव विशिष्टक्रियावचनत्वं दृश्यताम्। एतदुक्तं भवति क्रियायाः अनिष्पत्तेः सामर्थ्यात् भाविसाधनसम्बन्धाश्रयणेन क्रियावचनत्वम्। यथा–"धातोः कर्मणः समानकर्तृकादिच्छायां वा"[3] इति सूत्रम्। तत्र इषिकर्मत्वस्य भावित्वात् उपक्रम एवेषिकर्मत्वमुक्तम्। द्वितीयकारिकाया अर्थः–धातूपसर्गयोः सम्बन्धं बुद्धिविषयीकृत्य विलक्षणोऽर्थो धातुनैवाभ्यन्तरीकृतः पदप्रयोगकाले उपसर्गसम्बन्धे सति प्रकाशते श्रोतृणामिति। तथा–

**प्रयोगार्हेषु सिद्धः सन् भेत्तव्योऽर्थो विशेषणैः।**
**प्राक् तु साधनसम्बन्धात् क्रिया नैवोपजायते॥**[4]

इति च प्रयोगार्हत्वं च प्रत्ययोत्पत्त्यनन्तरम्। तेषु शब्देषु=धातुषु सिद्धः सन्नेव विशेषणैः प्रदिभिः भेत्तव्यः=विशेष्यः, श्रोतृबोधार्थमिति शेषः। क्रियोपसर्गाणां द्योतकत्मेव भाष्यसंमतम्। अत एव "उपपदमतिङ्"[5] इति सूत्रे धातूपसर्गयोः समासमाशङ्क्य 'पूर्वं धातुः साधनेन युज्यते' इति पूर्वं तिङि विशिष्टैव सामर्थ्यं स्यात्। तत्र अतिङ् इति निषेधात् न तिङन्तेनैकर्थीभाव इति समाहितम्। पूर्वं धातोरूपसर्गसम्बन्धे उपसर्गस्य वाचकत्वे च तत्र समासो वारयितुमशक्य एव स्यात्।

यद्यपि उपसर्गमुपक्रम्य–"स वाचको विशेषाणां, सम्भवात् द्योतकोऽपि वा"।[6] इत्युक्तं हरिणा। यथा प्रतिष्ठते इत्यत्र गतिनिवृत्तिवाचको धातुः उपसर्गो गतिवाचक इति पुण्याराजश्च। तथापि तिष्ठतेर्धातुत्वेन

1. पा. सू. 7/2/26
2. वाक्यपदीयम् 2/184-186
3. पा. सू. 3/1/7
4. वा.प. 2/183
5. महाभाष्यम् 2/2/19
6. वै.सि.प.ल.मं.-निपाता.

यज्यादिवदनेकार्थत्वात् धातोरेव गतिरर्थः। प्रशब्दस्तु द्योतक एव, उपसर्गत्वात् प्रकरोतीत्यादिस्थप्रशब्दवत् इत्यार्थिकया–

**स्थादिभिः केबलैर्यच्च गमनादि न गम्यते।**
**तत्रानुमानाद् द्विविधात्तद्धर्मा प्रादिरूच्यते।।**
**क्वचित् संभविनो भेदाः केवलैरनिदर्शिताः।**
**उपसर्गेण सम्बन्धे व्यज्यन्ते प्रपरादिना।।**[1]

इत्यादिना च द्योतकत्वमेवोपर्गाणां सिद्धान्तितम्। तद्धर्मा द्योतकत्वधर्मा, क्वचित् पचत्यादौ। यत्र तु भावे प्रत्ययः तत्राप्यन्तरङ्गत्वात् भिन्नपदोपात्तकर्त्रादिना साधनांशे निराकाङ्क्षत्वे उपसर्गभोग इति तत्रापि न समासः। अत एव "णेरध्ययने"[2] इत्यदि संगच्छते। अध्यागच्छति पर्यागच्छतीत्यादौ आगच्छतीत्यस्मादेव आगमनस्यावगत्या लौकिके शब्दव्यवहारे लाघवानादरात् स्पष्टार्थमेवाधिपर्योः प्रयोगः इति संभूयार्थबोधकत्वात् समुदाय एव विशिष्टार्थबोधक इति। उपसर्गस्यानर्थकत्वमर्थान्तराबोधकत्वादिति बोध्यम्।

क्वचित्तु क्रियागतविशेषबोधकतारिक्तनिपातानां वाचकत्वमेव। अत एव न इत्यतोऽभावबोधः, कस्य इति जिज्ञासा च दृश्यतेऽभावशब्द इव। किञ्च पर्वतात् आ इत्यादौ पर्वतादर्वागित्यर्थप्रतीतेस्तस्य वाचकत्वमेवेति निरुक्ते स्पष्टम्। द्योत्यत्वे हि पञ्चमी न स्यात् तस्य विशेषणता च स्यात्।

अत एव द्योत्यार्थस्य विशेषणत्वमिति स्वीकारादेव "स्त्रियाम्"[3] इति सूत्रे स्त्रीत्वस्य प्रत्ययार्थत्वात् प्राधान्ये स्त्रीत्वे एकत्वस्यैव सत्त्वेन द्विवचनबहुवचनयोरनुपपत्तिरित्याशङ्क्य द्योतकतापक्षेण समाहितं भाष्ये। तत्र हि स्त्रियाः प्रकृतिविशेषणत्वात् इत्यनेन स्त्रीप्रत्ययार्थस्य प्रकृत्यर्थविशेषणत्वात् इत्यर्थके द्योतकाता पक्ष उक्तः।

तदुक्तं हरिणा–

**निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः।**
**आगमा इव केचित् स्युः संभूयार्थस्य वाचकाः।।**[4]

इति द्योतकत्ववाचकत्वरूपपक्षद्वयम्। केचित् इत्युभयान्वयि, केचित् पृथगर्थाभिधायिनः वाचकाः, केचित् अनर्थका एवेत्याहुः, आगमा इवेति तदर्थः।

प्रातिशाख्येऽपि–

**नामाख्यातमुपसर्गो निपातः, चत्वार्याहुः पदजातानि शब्दाः।**
**तन्नाम येनाभिदधाति सत्वं तदाख्यातं येन भावं सधातुः।।**

---

1. वा.प. 2/189/187
2. अष्टा. 3/1/7
3. अष्टा. 4/1/3
4. वा.प. 2/192

**उपसर्गा विंशतिरर्थवाचका: सहेतराभ्यामितरे निपाता:॥**
**क्रियावाचाकमाख्यातमुपसर्गो विशेषकृत्।**
**सत्त्वाभिधायकं नाम निपाता: पादपूरणा:॥**

सधातुरिति तृतीयार्थे प्रथमा, धातुसहितेन येन वक्ता क्रियामभिदधाति तदाख्यातमित्यर्थ:। अर्थवाचका इत्यस्य मध्यमणिन्यायेन सम्बन्ध:। इतरे नामाख्याताभ्यामन्ये निपातास्तथा ज्ञेया। 'उपसर्गो विशेषकृत्' इत्यनेन तेषां द्योतकत्वं दर्शयति। पादपूरणा: पादपूरणा अपि इत्यर्थ इति तद्भाष्यम्॥

**शब्दकौस्तुभानुसारम्–**

शब्दकौस्तुभे[1] प्रारम्भे "अथ शब्दानुशासनम्" इति भाष्यव्याख्यानावसरे अथशब्दार्थकथनावसरे निपातार्थविचार: प्रस्तुत:। तथा हि–अथशब्द: प्रारम्भस्य द्योतको, न तु वाचक:, निपातत्वात् उपसर्गवत्। न च तेऽपि वाचका एवेति वाच्यम्, उपास्यते गुरु:, अनुभूयते सुखम् इत्यादौ धातो: सकर्मकक्रियापरत्वं विना कर्मणि लकारासम्भवेन वाचकत्वे स्थिते उपसर्गाणां द्योतकत्वस्यैव युक्तत्वात्।

**मीमांसाकमते–** उक्तं चाकृत्यधिकरणवार्तिके–

**चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णय:।**
**क्रियते संशयोत्पत्ते: नोपसर्गनिपातयो:॥**
**तयोरर्थाभिधाने हि व्यापारो नैव विद्यते।**
**तदर्थद्योतकौ तौ तु वाचक: स विचार्यते॥**

पदे चतुर्विधे नामाख्यातोपर्सगनिपातभेदेन चतु:प्रकारे द्विविधस्य नामाख्यातरूपस्य अर्थनिर्णय: क्रियते। कुत:, संशयोत्पत्ते:, नामार्थो जातिर्वा व्यक्तिर्वा, धात्वर्थो व्यापार: फलं वा उभयं वा इति संदेहे तिन्नर्णस्य कर्तव्यत्वात्। उपसर्गनिपातयोरर्थनिर्णयो न क्रियते। हि–यत: तयो: उपसर्ग निपातयो: अर्थाभिधाने व्यापार: शक्तिलक्षणान्यतररूप: नैव विद्यते। तौ यदर्थद्योतकौ=यस्यार्थं द्योतयत: स: नामाख्यातात्मक: वाचक: शब्द: विचार्यत इति उक्तकारिकयोरर्थ:।

---
1. शब्दकौस्तुभ:–आह्निकम्–1

# विशिष्टाद्वैनवेदान्तसिद्धान्ते प्रमेयमीमांसा

**श्रीरामनरेशत्रिपाठी**

शास्त्रं प्रमाणप्रमेयसमलङ्कृतं भवति। प्रमाणज्ञानेन यथार्थस्य वस्तुनोऽर्थात्प्रमेयस्य सिद्धिर्भवति। प्रमेयज्ञानमेव(तत्त्वज्ञानमेव) वेदान्तजगति मुमुक्षूणां लक्ष्यं भवति। तदर्थमर्थपञ्चकज्ञानस्य परमावश्यकता भवति। अर्थपञ्चकञ्च प्राप्यस्य ब्रह्मणो रूपं, प्राप्तुश्र्च प्रत्यगात्मनः प्राप्त्युपायः फलं चैव तथा प्राप्तिविरोधि च भवति। तदनुगुणमत्र शोधलेखे जीवात्मनः, परमात्मनः, परमात्मप्राप्त्युपायभूत-भक्त्यादीनाञ्च विवरणं दीयते यथामति-

**जीवात्मतत्त्वम्**

**देहेन्द्रियमनः प्राणधीभ्योऽन्योऽनन्यलक्षणः।**
**नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी।।**[1]

इत्याचार्यः यामुनाचार्यः विशिष्टाद्वैतराद्धान्तं निर्धारयति। अस्यायमर्थः – आत्मा देहेन्द्रियमनः प्राणधीभ्यो भिन्नस्वरूपः, स्वयं प्रकाशः, नित्यः, स्वाश्रितभूतशरीरादिषु व्यापकशरीरेषु भिन्न, स्वभावत आनन्दरूपश्च। तत्त्वत्रयग्रन्थे च –

**आत्मस्वरूपम् – शेन्नु शेन्नु परम्परमाय इत्युक्तप्रकारेण देहेन्द्रियमनः – प्राणविलक्षणम्, अजडमानन्दरूपं, नित्यमणवव्यक्तचिन्त्यं निरवयवं निर्विकारं ज्ञानाश्रयभूतमीश्वरस्य नियाम्यं धार्यं शेषभूतञ्च।**[2]

दर्शनसरणिषु नास्तिकत्वेन प्रथिताः लोकायतिकाः देहात्म-इन्द्रियात्म-मन आत्म-प्राणात्मवादान् समर्थयन्ति। प्रत्येकमपि वादविशेषः लोकायतिकमतस्य शाखाप्रभेदबोधकः। सौत्रान्तवैभाषिकमाध्यमिक-योगाचाररूपबौद्धाश्र्च क्षणिकज्ञानादीन्नात्मत्वेन बोधयन्ति। वेदान्तशास्त्रात्रैकदेशिनोऽद्वैतिनः नित्यज्ञानमात्मानमिति विचारयन्ति। सर्वमिपीदं पूर्वोक्तजीवात्मलक्षणेनैव निरासतां याति।

अणुत्वे सति चैतन्यं, शेषत्वे सति चैतन्यमित्यादीनि जीवसाधारलक्षणानीह शास्त्रे ग्रन्थेषु प्रतिपाद्यते। जीवस्य देहेन्द्रियमनः प्राणधीभ्यो विलक्षणत्वसिद्धिश्चोच्यतेऽत्र। तथा च **मम शरीरम्, चक्षुषा पश्यामि, वाचा वदामि, मनसा जानामि, मम प्राणाः, जानाम्यहमि**त्यादि लौकिकज्ञानेनैव तस्य वैलक्षण्यसिद्धिरीषत्स्फुरति।

---

1. सिद्धित्रयम्- आत्मसिद्धिप्रकरणम्, पृष्ठसंख्या-
2. तत्त्वसूत्रम् 1/4

यद्यपि स्वरूपतोऽयं जीवोऽनुरूपोऽथापि स्वधर्मभूतज्ञानव्याप्त्यैकधैवानेकविषयानुभववान् भवति। जीवस्याणुत्वञ्च सूत्रितञ्च सूत्रकारैः – **उत्क्रान्तिगत्यागतीनाम्**[1], **स्वात्मना चोत्तरयोः**[2], **नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्**[3], **स्वशब्दोन्मानाभ्याञ्च**[4] इत्यादिभिः। सूत्राधारभूतश्रुतयश्च – **तेन प्रद्योतेनैव आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः**[5], **ये वै केचनास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति**[6], **तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे**[7], **एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश**[8], **बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः**[9], **आराग्रमात्रो ह्यवरोऽपि दृष्टः**[10] इत्यादिः।

जीवस्य नित्यत्वञ्च तस्य पूर्वानुभूतार्थप्रतिसन्धानाद्भवति। तथा च सूत्रम्– **नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः**[11]। एतद्विषयकश्रुतिप्रमाणानि च यथा – **न जायते म्रियते वा विपश्चित्**[12], **ज्ञाज्ञौ द्वावजौ**[13], **नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्**[14], **अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे**[15] इत्यादिः। अणुर्नित्यश्चायं जीवः प्रतिशरीरं भिन्नस्वरूपः स्वयं प्रकाशश्च भवति। जीवस्यैक्यव्यवहारः ज्ञानैकाकारतया भवति न तु स्वरूपैक्यात्। लोके हि व्रीहौ एको व्रीहिरिति बुद्धिं ज्ञानैकाकारतया जानन्ति जनाः न तु स्वरूपैक्यात्।

उपाधिकारणादयं जीवः स्वतः आनन्दस्वरूपः जन्मजरामरणादिदुःखसंसारभाग् भवति। कर्तृत्व-भोक्तृत्व-शरीरित्वादयोऽस्यैव भवन्ति। जीवोऽयं बद्धमुक्तनित्यभेदातिविधः भवति। **अनिवृत्तसंसाराश्-चतुर्दशभुवनाण्डकटाहवर्तिनो ब्रह्मादिकीऽपर्यन्ताश्चेतन- विशेषाः**[16] जीवाः बद्धजीवाः भवन्ति।

---

1. ब्रह्मसूत्रम् 2/3/20
2. तत्रैव 2/3/21
3. तत्रैव 2/3/22
4. तत्रैव 2/3/23
5. बृहदारण्यकोपनिषत् – 6/4/2
6. कौषीतिक्युपनिषत् 1/2
7. बृहदारण्यकोपनिषत् – 6/4/6
8. मुण्डकोपनिषत् – 3/1/9
9. श्वेताश्वतरोपनिषत् 5/9
10. तत्रैव – 5/8
11. ब्रह्मसूत्रम् 2/3/18
12. कठोपनिषत् 2/18
13. श्वेताश्वतरोपनिषत् 1/9
14. तत्रैव 6/13
15. कठोपनिषत् 2/18
16. यतीन्द्रमतदीपिका, अष्टमोवतारः

बद्धजीवविषयकश्रुतयश्च – **समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः**[1], **द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वादवत्यनश्नन् चान्योऽभिचाकशीति**[2] इत्यादीनि।

स्वगुणतः कर्मवशाच्चायं जीव जन्मजरामरणादिसांसारिकदुःख-भाग्भवति। तथा च श्रुतयः साधुकारी **साधुर्भवति, पापकारी पापो भवति, पुण्यः पुण्येन कर्मणा पापः पापेन**[3], **तद्येह रमणीयाचरणाभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा।**[4] इत्यादयः। शास्त्रवश्यतवश्यभेदेनायं बद्धः द्विविधो भवति। इन्द्रियादिकरणायत्तज्ञानबद्धाः शास्त्रवश्याः भवन्ति। शास्त्रावश्याश्च तिर्यक्स्थावरादयो जीवाः भवन्ति। बुभुक्षुमुमुक्षुभेदेन शास्त्रविश्याः द्विविधाः भवन्ति। धर्मार्थकामरूपपुरुषार्थत्रिकनिष्ठाः बुभुक्षुवः भवन्ति। मुमुक्षवश्च चरमपुरुषार्थभूतमोक्षनिष्ठाः भवन्ति। त्रैवर्गिकपुरुषार्थनिष्ठाः बद्धाः अर्थकामधर्मकामरूपाः भवन्ति। देहस्यात्मत्वाभिमानिनो जीवाः अर्थकामपराः कथ्यन्ते। धर्मलक्षणानुगुणं तदाचरणनिष्ठाः धर्मपराः कथ्यन्ते। देवतान्तरपरत्वेन भगवत्परत्वेन च धर्मपराः द्विविधाः। ब्रह्मरुद्राद्याराधनपराः जीवाः देवतान्तरपराः भवन्ति। भगवत्पराश्च ते भक्तजीवाः ये आर्तो जिज्ञासुरर्थार्थिस्वरूपाः भवन्ति। भक्ताश्च प्रपन्नरूपाः मोक्षपराश्च भवन्ति। भक्तश्च लक्ष्यते – **पुनरधीतसाङ्गसशिरस्कवेदाः पूर्वोत्तरमीमांसा-परिचयाच्चिदद्विलक्षणानवधि-कातिशयानन्दरूपं निखिलहेयप्रत्यनीकं समस्तकल्याणगुणात्मकं ब्रह्मावधार्य तत्प्राप्त्युपायभूतां साङ्गां भक्ति स्वीकृत्य तया मोक्षं प्राप्तुकामाः।**[5] इति। भक्तिश्च तैलधारावदवच्छिन्नस्मृतिसन्तानरूपं ज्ञानमेव भवति। साध्यसाधनभेदेन भक्तिः द्विविधा भवति। व्यासादिमहर्षयः साधनभक्तिसम्पन्नाः साधनभक्तिनिष्ठाः कथ्यन्ते। नारदादयो महर्षयः साध्यभक्तिनिष्ठाः भवन्ति। प्रपन्नश्च **आकिञ्चन्यानन्यगतित्वधर्मविशिष्टो भगवन्तमाश्रितः**[6] इति लक्ष्यते। एकान्तिपरमैकान्तिभेदेन प्रपन्नजीवः द्विविधो भवति। दृप्तार्थभेदात् परमैकान्तिजीवः द्विविधः।

मुक्तश्चैवं वक्ष्यमाणलक्षणसम्पन्नो भवति – **उपायपरिग्रहानन्तरं नित्यनैमित्तिकभगवदाज्ञा-नुज्ञाकैङ्कर्यरूपाणि कर्माणि स्वयम्प्रयोजनतया कुर्वन् भगवद्भागवतापचारांश्च वर्जयन् देहावसानकाले सुकृतदुष्कृते मित्रामित्रयोर्निक्षिपन् वाङ्मनसीत्यादिप्रकारेण हार्दे परमात्मनि विश्रम्य मुक्तिद्वारभूतसुषुम्नानाडीं प्रविश्य तया ब्रह्मरन्ध्रान्निष्क्रम्य हार्देन साकं सूर्यकिरण-द्वाराग्निलोकं गत्वा दिनपूर्वोत्तरायणसंवत्सराद्य-भिमानिदेवताभिर्वायुना च पथि सत्कृतः सूर्यमण्डलं**

---

1. मुण्डकोपनिषत् 3/1/2
2. तत्रैव 3/1/1
3. बृहदारण्यकोपनिषत् – 4/4/5
4. छान्दोग्योपनिषत् – 5/10/7
5. यतीन्द्रमतदीपिका, अष्टमोवतारः
6. यतीन्द्रमतदीपिका, अष्टमोवतारः

**भित्त्वा रथचक्ररन्ध्रद्वारा सूर्यलोकं गत्वाऽनन्तरं चन्द्रविद्युद्वरुणेन्द्रप्रजापतिभिर्मार्ग-प्रदर्शिभिरातिवाहिकैर्गणैस्सह सोपचारं तत्तल्लोकानतीत्य प्रकृतिवैकुण्ठसीमा-परिच्छेदिकां विरजां गत्वा सूक्ष्मशरीरं विहाय अमानवकरस्पर्शादप्राकृतदिव्यविग्रहयुक्तश्चतुर्भुजो ब्रह्मालङ्कारेणालङ्कृतः इन्द्रप्रजापतिसंज्ञाकनगरद्वारपालाभ्यानुज्ञया श्रीवैकुण्ठाख्यं दिव्यनगरं प्रविश्य पताकालङ्कृतदीर्घ-प्राकारसहितगोपुरमतीत्य ऐरम्मदाख्यामृत-सरस्सोमवनाख्याश्वत्थं च दृष्ट्वा, शतं मालाहस्ता इत्याद्युक्तपञ्चशत-दिव्याप्सरोगणैरूपचारितो ब्रह्मगन्धादिभिरलङ्कृतास्तत्रा-नन्तगरुडविष्वक्सेनादीन् प्रणम्य तैर्बहुमतो महामणिमण्डपमासाद्य पर्यङ्कसमीपे स्वाचार्यान् प्रणम्य पर्यङ्कसमीपं गत्वा तत्र धर्मादिपीठोपरि कमलेऽनन्ते विमलादिभिश्चामरहस्ताभिस्सेव्यमानं श्रीभूमिनीलासमेतं शङ्खचक्रादिदिव्यायुधोपेतं जाज्वल्यमानकिरीटमुकुटचूडावतंसमकरकुण्डलग्रैवेयकहारकेयूरकटक-श्रीवत्सकौस्तुभ-मुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुराद्यपरिमितिदिव्यभूषणैर्भूषितम-परिमितोदारकल्याणगुणसागरं भगवन्तं दृष्ट्वा तत्पादारविन्दयुगलं शिरसा प्रणम्य पादेन पर्यङ्कमारुह्य तेन स्वाङ्के स्थापितः कोऽसीति पृष्टो ब्रह्मप्रकारोऽस्मीत्युक्त्वा तेन कटाक्षितस्तदनुभव-जनि प्रहर्षप्रकर्षात्सर्वदेशसर्वकालसर्वावस्थोचितसर्वकैङ्कर्यकराविर्भूतगुणाष्टकोत्तरावधिरहितब्रह्मानुभववान् यः स मुक्त इत्युच्यते।**[1]

**नित्यजीवस्वरूपाः** नित्यसूरयश्च कदाचिदपि भगवदभिमतविरुद्धाचरणहितेन ज्ञानसङ्कोचप्रसङ्गरहिता भवन्ति, ते च अनन्तगरुडविष्वक्सेनादयः भवन्ति।

### अचित्तत्त्वम्

यद्वस्तु स्वातन्त्र्येण किमपि न चिनोति तदेवाचित्कथ्यते। अचित्पदार्थः प्रकृतिमायाविद्याक्षर-प्रधानादिविविधशब्दवाच्याः भवन्ति। ईश्वर अस्या विकारान् प्रकरोतीति प्रकृतिः कथ्यते। अपादाने क्तिन् प्रत्ययोऽत्र भवति। क्षरति विकरोति च यद्वस्तु तद् क्षरं भवति। अचिद्विषयश्रुतयश्च यथा – क्षरं प्रधानममृताक्षरं हरः **क्षरात्मानावीशते देव एकः, क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते** इत्यादयः। अस्या प्रकृतिरिति नामकरणे कारणञ्चास्याः महदहङ्कारादिरूपेण विकारित्वादेव जातम्। विद्येतराविद्या भवति। विद्याविरोधित्वादप्यविद्येत्युच्यते। **क्षरं त्वविद्या ह्यमृतं तु विद्या** इति श्रुतिरत्र प्रमाणम्। ईश्वरस्य विचित्रसृष्ट्युपकरणत्वादियं मायेति कथ्यते। विचित्रकार्यकरत्वमिह मायापदार्थ इति वक्तुं शक्यते। **मायान्तु प्रकृतिं विद्यादि**ति श्रुतिवाक्यं प्रकृतिपर्यायत्वं मायाया ज्ञापयति। इयमेव प्रकृतिः परमात्मेक्षणाधीनगुणवैचित्र्यादव्यक्तवाच्यापि भवति। उच्यते च – **कार्योन्मुखावस्था स्यादव्यक्तव्यपदेशभाक्**[2] इति।

---

1. यतीन्द्रमतदीपिका, अष्टमोवतारः
2. वेदान्तकारिकावली, प्रकृतिनिरूपणम्, 4

अव्यक्ताच्च महज्जायते। महत्पदार्थश्च त्रैगुणभेदात् त्रिविधा भवति। महतश्चाहङ्कारोत्पत्तिर्भवति। अहङ्कारोऽपि त्रिगुणवैचित्र्यपूर्णो भवति। अहङ्काराच्चेन्द्रियाणि जायन्ते। इन्द्रियाणि च ज्ञानेन्द्रियकर्मेन्द्रियरूपाणि भवन्ति। ज्ञानप्रसरणशक्तमिन्द्रियं ज्ञानेन्द्रियं कथ्यते, यथा मनः श्रोत्र चक्षुर्घ्राणरसनत्वग्भेदाज्ज्ञानानीन्द्रियाणि षट् भवन्ति। उच्चारणादिष्वन्यतमक्रियाशक्तत्वं कर्मेन्द्रियं कथ्यते। कर्मेन्द्रियाणि च वाक्पाणिपाद-पायूपस्थभेदाच्च पञ्चधा भवन्ति। इन्द्रियाणि च जीववदेवाणुस्वरूपाणि भवन्ति। इन्द्रियाणि च जीवस्योत्क्रान्त्यागमनकालेषु जीवेन सहैव संतिष्ठन्ते।

गीतञ्च भगवता – **मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति। शरीरं यदवाप्नोति यच्चाप्युक्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्॥**[1] इति। अयमेवार्थः सूत्रकारैरपि **तदन्तरसम्परिष्वक्तौ रहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्**[2] इति सूत्रयति। इन्द्रियाणि च जीवस्य मुक्तिकाले नित्यविभूत्याख्यवैकुण्ठादिलोकेषु गमनयोग्याभावाद्यावत्प्रलयमिहैव लोके तिष्ठन्ति। राजसाहङ्कारसहकारेण भूतादिनाम्ना व्यपदिश्यमानतामसाहङ्काराच्च शब्दप्रभृततीनि पञ्चतन्मात्रानि जायन्ते। तेभ्यश्चाकाशादिपञ्चमहाभूतान्युत्पद्यन्ते। पञ्चमहाभूतानामव्यवहितसूक्ष्मावस्थैव तन्मात्रशब्देन कथ्यते। तन्मात्राणि शब्दस्पर्शादिभेदेन पञ्च भवन्ति। भूतान्यप्याकाशवाय्वादिभेदेन पञ्च भवन्ति। शब्दतन्मात्रादाकाश-स्योत्पत्तिः भवति। आकाशात् स्पर्शतन्मात्रस्योत्पत्तिः भवति, तस्माच्च वायुरुत्पद्यते। एवं क्रमेण स्वस्वतन्मात्राभ्यो भूतपञ्चकस्योत्पत्तिर्भवति।

पञ्चमहाभूतानां सत्त्वं शब्दादीनां गुणानामन्यत्र भूतेष्वुपलम्भो पञ्चीकरणप्रक्रियया भवति। पञ्चीकरणन्त्वेवं शास्त्रे विख्यातम्। यथा–

**द्वेधा भूतानि भित्त्वा पुनरपि च भिन्नत्वार्धमेकं चतुर्धा**
**तैरेकैकस्य भागैः परमनुकलयत्यर्धमर्धं चतुर्भिः।**
**इत्थं पञ्चीकृतैस्तैर्जनयति स जगद्धेतुरण्डादिकार्या-**
**ण्यैदपर्यं त्रिवृत्त्वश्रुतिरधिकगिरामक्षमैका निरोद्धुम्॥**[3]

इति।

पञ्चीकरणस्य सुलभावगतिरेवं भवितुं शक्या–

---

1. श्रीमद्भगवद्गीता 15/7-8
2. ब्रह्मसूत्रम् 3/1/1
3. वेदान्तकारिकावली टिप्पणी, प्रकृतिनिरूपणम्, श्लोकसंख्या - 28

| प्रधानभूतनाम | पृथिव्यंशभागः | जलांशभागः | तेजोऽशभागः | वाय्वंशभागः | आकाशांशभागः |
|---|---|---|---|---|---|
| पृथिवीः | 1/2 | 1/8 | 1/8 | 1/8 | 1/8 |
| जलम् | 1/2 | 1/8 | 1/8 | 1/8 | 1/8 |
| तेजः | 1/2 | 1/8 | 1/8 | 1/8 | 1/8 |
| वायुः | 1/2 | 1/8 | 1/8 | 1/8 | 1/8 |
| आकाशः | 1/2 | 1/8 | 1/8 | 1/8 | 1/8 |

वेदे च त्रिवृत्करणप्रक्रियाया एवोल्लेखः प्रधानतयोपलभ्यते। तथापि पञ्चीकरणस्य निषेधः न सम्भवति। तत्रोक्तत्रिवृत्करणं पृथिव्यादीनामाधारभूयस्त्वमात्रपरं भवति। ब्रह्मसूत्रग्रन्थे चायमर्थः सुसाधितः। तथा च सूत्रे– **वैशेष्यात्तु तद्वादस्तद्वादः**[1] एवं **त्र्यात्मकत्वात्तु भूयसत्त्वात्**[2] इति। शरीरस्योत्पत्तिः प्रधानतया पञ्चभूतानि प्रकृतिमहदहङ्कारांश्चाश्रित्य भवति। शरीर तदेव भवति यत् प्रत्याधेय-त्वविधेयत्वशेषत्वनियमैरपृथक्सिद्धं द्रव्यम्। शरीरं द्विविधं नित्यानित्यभेदात्। सत्त्वरजस्तमःकालजीव-शुभांश्रयादिकमीश्वरशरीरस्य भवति, अतस्तन्नित्यं भवति। तथैव नित्यसूरिणामपि। अनित्यं शरीरं कर्मकृताकर्मकृतभेदाद्विविधं भवति। अकर्मकृतशरीरं तदुच्यते यन्मुक्तादीनामिच्छागृहीतं भवति। सौभरिप्रभृतीनां सङ्कल्पकृतानामन्येषाञ्च शरीरं कर्मकृतमनित्यञ्च भवति।

**ब्रह्मतत्त्वम्**

सर्वेश्वरत्वं, सर्वकर्मसमाराध्यत्वं, सर्वशेषित्वं, सर्वकर्मफलप्रदत्वं, सर्वाधारत्वित्यादीनि ब्रह्म लक्षणानि भवन्ति। ब्रह्मशब्देन इह शास्त्रे भगवान् पुरुषोत्तमः गृह्यते। भाषितं हि श्रीभाष्यकारैः– **ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषाऽनवधिकातिशयासंख्येकल्याणगुणः पुरुषोत्तम उच्यते।**[3] ब्रह्म एव जगतः निमित्तोपादान-सहकार्याख्यसर्वकारणभूतं भवति। उपादानकारणत्वञ्च तस्यैव ब्रह्मणः सूक्ष्मचिदचिद्वि-शिष्टवेषेण भवति। निमित्तकारणत्वं तु सङ्कल्पविशिष्टवेषेण सिद्ध्यति। सहकारिकारणत्वसिद्धिश्च कालाद्यन्तर्यामित्ववेषेण भवति। उपदानकारणं तदुच्यते यद्विकारयोग्यं कार्यरूपेण वस्तु भवति। कार्यरूपेण परिणामयितृ निमित्तकारणं भवति। कार्यस्योत्पत्तय उपकरणत्वेन विद्यमानं वस्तु सहकारिकारणं भवति।

---

1. ब्रह्मसूत्रम् 2/4/18
2. तत्रैव – 3/1/2
3. श्रीभाष्यम् – जिज्ञासाधिकरणम्, भागः–1, पृष्ठसंख्या 18

जगज्जन्मादिकारणत्वेन विद्यमानं तत्त्वं ब्रह्मैवेति श्रुतिर्वदति। यथा– **यतो वा इमानि भूतानि**[1]ति। ब्रह्म च श्रीमन्नारायण एव। **एको ह वै नारायण आसीन्न ब्रह्मा नेशानः** इति श्रुतिरत्र प्रमाणत्वेनोदाहर्तुं शक्या। नारायणश्च व्रहम्भ सविशेषयुक्तमेव भवति, न तु निर्गुणरूपं, तस्य जगत्कारणत्व-मोक्ष-प्रदत्वादिगुणयोग-श्रवणात्। सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणब्रह्म भवति, स्थूलचिदचिद्विशिष्टं ब्रह्म कार्यब्रह्म भवति। सूक्ष्मस्यैव स्थूलत्वपरिणामात् कारणात्कार्यस्याभिन्नत्वमनन्यत्वं वा सिद्ध्यति।

ब्रह्म च एकमेव, जीववन्न नाना। स्वभावतः एव विभुस्वरूपः। सर्वव्यापकत्वादस्य विभुत्वमव्याहतम्। देशकालवस्तुपरिच्छेद-रहितत्त्वादीश्वरोऽनन्त इति कथ्यते। ईश्वरस्य स्वरूपनिरूपकधर्माः सत्यत्वज्ञानत्वादयः भवन्ति। ज्ञानशक्त्यादयस्तन्निरूपितस्वरूपधर्माः कथ्यन्ते। सार्वज्ञसर्वशक्तित्वादयो गुणाः जगत्सृष्ट्युपयुक्तधर्मा उच्यन्ते। वात्सल्यादयः स्वाश्रयणोपयुक्तधर्माः भवन्ति। दयादयश्च भक्तरक्षणोपयुक्तधर्मा भवन्ति। ब्रह्मणः स्रष्टृत्वं चतुर्मुखब्रह्मा-कालाद्यन्तर्यामित्वेन भवति। महाविष्णव-वतारत्वेन महर्षमनुकालाद्यन्तर्यामिरूपेण च जगत्स्थितिकर्तृत्वं भवति। तस्य संहारकर्तृत्वञ्च रुद्रकालाद्यन्तर्यामित्वेन भवति।

सम्पूर्णसृष्टिप्रक्रियायाः ज्ञानाय विष्णुपुराणश्लोकाः सहकराः भवन्ति। यथा–

**एकांशेन स्थितो विष्णुः करोति परिपालनम्।**
**मन्वादिरूपश्चान्येन कालरूपोऽपरेण च।।**
**सर्वभूतेषु चान्येन संस्थितः कुरुते स्थितिम्।**
**सत्त्वगुणं समाश्रित्य जगतः पुरुषोत्तमः।।**[2]

**आश्रित्य तमसोवृत्तिमन्तकाले तथा प्रभुः।**
**रुद्रस्वरूपो भगवानेकांशेन भवत्यजः।।**

**अग्न्यन्तकादिरूपेण भागेनान्येन वर्तते।**
**कालस्वरूपो भागोऽन्यः सर्वभूतानि चापरः।।**

**विनाशं कुर्वतस्तस्य चतुर्धैव महात्मनः।**
**विभागकल्पना ब्रह्मन् कथ्यते सार्वकालिकी।।**[3]

विभुस्वरूपञ्च ब्रह्म लीलायै पञ्चविधमलङ्कुरुते। ब्रह्मणः पञ्चरूपता च पर-व्यूह-विभव-अन्तर्यामि-अर्चारूपा एव। पाञ्चरात्रागमे चायं विषयः सुप्रकाशितः। यथा–

**मम प्रकाराः पञ्चेति प्राहुर्वेदान्तपारगाः।**
**परो व्यूहश्च विभवो नियन्ता सर्वदेहिनाम्।।**

1. तैत्तिरीयोपनिषद्, भृगुवल्ली 1/2
2. विष्णुपुराणम् – 1/22/26-27
3. तत्रैव –

**अर्चावतारश्च तथा दयालुः पुरुषाकृतिः।**
**इत्येवं पञ्चधा प्राहुर्मां रहस्यविदो जनाः।।**[1] परस्वरूपम्

ज्ञानशक्तिंबलैश्वर्याद्यसंख्येयकल्याणगुणगणविशिष्टः परमपदे श्रीवैकुण्ठाख्ये लोके विद्यमानः परब्रह्मपरवासुदेवादिशब्दवाच्यो भगवान् नारायणः परशब्देनेह उच्यते। प्रसिद्धा ह्यागमोक्तिः–

**वैकुण्ठे तु परे लोके श्रीसहायो जनार्दनः।**
**उभाभ्यां भूमिनीलाभ्यां पार्श्वद्वयसुशोभितः।।**[2]

**व्यूहस्वरूपम्**

व्यूहस्य लक्षणं यथा – **व्यूहो नाम सृष्टिस्थितिसंहारार्थं संसारिसंरक्षणार्थमुपासकानुग्रहार्थञ्च सङ्कर्षणप्रद्युम्नानिरुद्धरूपेणावस्थानम्**[3] इति पिल्लै लोकाचार्याः। वासुदेवः, प्रद्युम्नः, सङ्कर्षणः, अनिरुद्ध इति व्यूहस्य चातुर्विध्यं भवति। गुणतारतम्यजनितभेद एव चातुर्विध्यकारणम्। वासुदेवः ज्ञानबलैश्वर्यवीर्यशक्तितेजसाख्यषड्गुणपरिपूर्णः भवति। ज्ञानबलगुणपरिपूर्णः सङ्कर्षणः भवति। प्रद्युम्नश्चैश्वर्यवीर्याभ्यां परिपूर्णः भवति। शक्तितेजोभ्यामनिरुद्धः परिपूर्णः भवति। एतेषामुत्पत्तिक्रमश्च विश्वामित्रसंहितायामुक्तम्। यथा–

**वासुदेवात्ततो जज्ञे सङ्कर्षण समाह्वयः।**
**तस्मात् प्रद्युम्नसम्भूतिरनिरुद्धस्ततोऽभवत्।।**
**एते सर्वे चैकवक्त्राश्चतुर्बाहुसमन्विताः।।**[4]

**विभवस्वरूपम्**

ईश्वरस्य तत्तत्सजातीयरूपेणाविर्भावत्वमेव विभवस्वरूपं भवति। ईश्वराविर्भावोऽवतार इति कथ्यते। ईश्वस्य इंह लोकेऽवतरणं न जीववत्कर्मकृतमपि तु स्वतन्त्रेच्छैव भवति। जीवसंरक्षणैकमात्र-प्रयोजनमुद्दिश्य भगवान् विभवरूपतामपद्यते। अवतारकालेषु भगवति अस्मद्गोचरशोक-संश्लेषादयश्च भगवतः लीलामात्रमेव। नैतद्दुःखादय ईश्वरं स्प्रष्टुं प्रभवन्ति। तेजस्यन्धकारप्रवेशानर्हत्ववदेव ईश्वरे दुःखादिप्रवेशोऽसम्भवः।

**अन्तर्यामिस्वरूपम्**

अन्तर्यामित्वं भगवत एवं लक्ष्यते। यथा– **अन्तर्यामित्वं नाम स्वर्गनरकाद्यनुभवदशायामपि जीवात्मनः सुहृत्वेन योगिभिर्द्रष्टव्यतया हृदयप्रदेशावस्थिततत्वरूपम्**[5] तत्र श्रुतिस्मृतिप्रमाणानि तु

1. पाञ्चरात्रागमः
2. तत्रैव
3. तत्त्वत्रयम् 3/36
4. विश्वमित्रसंहिता 4/15-16
5. यतीन्द्रमतदीपिका, नवमोऽवतारः

**अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा।**[1] **य आत्मानमन्तरो यमयति स ते आत्मान्तर्याम्यमृतः।**[2] **ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।**[3] इत्याद्यनेकानि।

**अर्चावतारस्वरूपम्**

मूर्तिविशेष एवार्चावतारः कथ्यते। नानेन सर्वेषां मूर्तीनामर्चात्वसाम्यम्, अपि तु वैदिकागमाद्युपदिष्ट-लक्षणलक्षितस्यैव मूर्तेः अर्चात्वं सिद्ध्यति। सिद्धाभितार्चालक्षणञ्च- **देशकालविप्रकर्षरहिताश्रिताभिमत-द्रव्यादिकं शरीरतया स्वीकृत्य तस्मिन्नप्राकृतशरीरविशिष्टस्सन्नर्चकपराधीनस्नानभोजनासनशयन-स्थितिः सर्वसहिष्णुः परिपूर्णो गृहग्रामनगरप्रशस्तदेशैलादिषु वर्तमानो मूर्तिविशेषः।**[4] प्रतिष्ठाभेदेना-र्चावतारस्य चातुर्विध्यं शास्त्रेषूच्यते। स्वयंभूमूर्ति, दैवमूर्तिः, मानुषमूर्तिः, सैद्धमूर्तिरिति मूतेश्चातुर्विध्यम्।

**मोक्षस्वरूपम्**

मोक्षशब्दस्य व्युत्पत्तिः **मोक्ष अवसाने** इत्यर्थकधातोः चौरादिकाद्भावेघञ् प्रत्यये कृते भवति। अज्ञानं बन्धहेतुः तन्निवृत्तिः मोक्षहेतुश्चेति दार्शनिकसरणिः। मोक्षश्चास्मिन् शास्त्र एवं निर्वच्यते- **निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानान्दैकस्वरूपस्य स्वाभाविकानवधिकातिशया-संख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्म-रूपाविद्यातिरोहितस्वरूपस्याविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते।**[5]

मोक्षश्च चतुर्विधः शास्त्रं उच्यते। सालोक्यम्, सामीप्यम्, सारूप्यम्, सायुज्यमिति तदीयभेदाः। उच्यते हि-

**लोकेषु विष्णोर्निवसन्ति केचित्समीपमिच्छन्ति च केचिदन्ये।**
**अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः॥**

एतेषु सायुज्यमेव सर्वोत्कृष्टं कथ्यते। स्मर्यते हि-

**मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन।**
**इच्छाम्यहं महाबाहो सायुज्यं तव सुव्रत॥**

---

1. तैत्तिरीयोपनिषद्, 3/11/3
2. शतपथब्राह्मणम् 14/5/30
3. श्रीमद्भगवद्गीता 18/61
4. यतीन्द्रमतदीपिका, नवमोऽवतारः
5. श्रीभाष्यम् भाग-2, पृष्ठसंख्या 147

सायुज्याख्ये मोक्षं इतराणि सर्वाणि सालोक्यादीन्यन्तर्भवन्ति। **सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते**[1]ति श्रुतिः सर्वगुणविशिष्टं ब्रह्म मोक्षदशायां जीवोऽनुभवतीति कथयति। सायुज्यं नाम समानगुणकत्वरूपब्रह्मानुभव एव। सायुज्यमित्यनेन रूपसायुज्यं नोच्यते। मुक्तजीवस्य ब्रह्मणः सह समानभोग्यत्वमेव सायुज्यमिति कथ्यते।

**मोक्षोपायः**

**श्रीमन्नारायण एव चिदचिद्विशिष्टोऽद्वैतं तत्त्वम्। भक्तिप्रपत्तिभ्यां प्रसन्नस्स एवोपायः।**[2] इति भगवत्प्रसादस्यैव मोक्षोपायत्वमाचार्याः साधयन्ति। भगवत्प्रसादश्च भक्त्यनुष्ठानेन प्रपत्त्यनुष्ठानेन च भवति।

**भक्तिस्वरूपम्**

भक्तिश्च महनीयविषये प्रीतिः, तैलधारावदवच्छिन्नस्मृतिसन्तानरूपेत्याद्यनेकलक्षणैः निर्वच्यते। तत्रेदं लक्षणमिदम्–

**भक्तियोगो नाम –यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाष्टाङ्गयुक्तस्तैल-धारावदवच्छिन्नस्मृतिसन्तानरूपः। स च विवेकविमोकाभ्यासक्रिया-कल्याणानवसादानुद्धर्षरूप-साधनसप्तकजन्यः।**[3]

निगमान्तमहादेशिकास्तु–

**भक्तिर्मुक्तेरुपायः श्रुतिशतविहितस्सा च धीः प्रीतिरूपा**
**तन्निष्पत्त्यै फलेच्छाद्युपधिविरहितं कर्म वर्णाश्रमादेः।**
**ज्ञानाध्यानादिवाच्यो समफलविषया सैव युक्ता प्रतिष्ठा**
**सामान्योक्तिस्समानप्रकरणपठिता पर्यवस्येद्विशेषे।।**[4]

**मध्यमे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये।**
**ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः।।**[5]

भक्तिः साध्यरूपा प्रपत्तिरिति कथ्यते। प्रपत्तिः शरणागतिर्भवति। सा चाकिञ्चनानन्यगतिविषयिका भवति।

**धर्मो वर्णादियोग्यः कलुषशमनतस्सत्त्ववृद्ध्यापकारी**
**भक्तेस्तद्वत्प्रपत्तिस्त्वगतिकसमयेष्वन्तरायापहन्त्री ।**

---

1. तैत्तिरीयोपनिषदानन्दवल्ली 1/2
2. यतीन्द्रमतदीपिका –प्रत्यक्षावतारः
3. यतीन्द्रमतदीपिका, पृष्ठसंख्या 138
4. तत्त्वमुक्ताकलापः, जीवसरः– श्लोकसंख्या 29
5. गीतार्थसंग्रहरक्ष–3

**सानुक्रोशे हि शक्ते शरणवरणतस्सर्वसाध्यं सुसाध्यं।**
**मोक्षाकाङ्क्षी प्रपद्ये शरणमहमिति क्वापि मन्त्रे श्रुतञ्च।।**[1]

**प्रपत्तिस्वरूपम्**

प्रपत्तिशब्दव्युत्पत्तिस्तु प्रपूर्वगत्यर्थकपद्धातोः भावे क्तिन् गत्यर्थकानां ज्ञानार्थकत्वेन धात्वर्थो विश्वासस्तत्र प्रकर्षश्च महत्त्वं, तथा चाध्यवसायवैशिष्ट्यं महाविश्वासोऽनेनोच्यते।[2]

**अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्।**
**तदेकोपायतायाञ्च्या प्रपत्तिश्शरणागतिः।।**[3]

इति प्रपत्तिर्गीयते। प्रपत्तिरेव न्यासविद्या भवति। न्यासविद्यैवाध्यवसायादिविशेषविषिष्टा भवति। द्वित्रंशत् ब्रह्मविद्याः लोके प्रसिद्धा, तास्वियमन्यतमा भवति। श्रुतिस्मृत्यादिविहिता च। प्रपत्तिश्च वेदे यथा–

**यः समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये। यो नमसा स्वध्वरः।।**[4]
**समित्साधनकादीनां यज्ञानां न्यासमात्मनः।**
**नमसा योऽकरोद्देवे स स्वध्वर उदीरितः।।**[5]

इति।

भगवानपि गीतायां–

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।।**[6]

इत्याह।

मायातरणमपि प्रपत्त्यधीनमेव। आह च भगवान् तत्रैव–

**मामैव ये प्रपद्यन्ते मायामेतां तरन्ति ते।।**[7]

इयञ्च प्रपत्तिः षडङ्गयुक्ता भवति। यथा–

---

1. अधिकरणसारावलिः 443
2. विशिष्टाद्वैतशब्दकोषः पृष्ठसंख्या 249
3. प्रपन्नपारिजातम्, स्वरूपपद्धतिः 2
4. ऋग्वेदसंहिता–8–19–5
5. अहिर्बुध्न्यसंहिता 37–37
6. श्रीमद्भगवद्गीता 18/66
7. तत्रैव 7/14

**आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्।**
**रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा।।**
**आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः।।[1]**

**इयं विद्यैतद्देहावसाने मोक्षप्रदा, अन्तिमप्रत्ययनिरपेक्षा, सकृत्कर्तव्या, न्यासशरणागति-रित्यादिशब्दवाच्या, ज्ञानविशेषरूपा, एषा गुरुमुखाद्रहस्यादिशास्त्रेषु सत्संप्रदायपूर्वकं ज्ञातव्या।[2]** इति न्यासविद्यायाः माहात्म्यं बहुधा वर्ण्यते।

वेदान्तदेशिकाश्च न्यासविद्यामेवं ब्रूते—

**मुमुक्षुत्वे तुल्ये सति च मधुविद्यातिषु यथा**
**व्यवस्था संसिध्यत्त्यधिकृतिविशेषेण विदुषाम्।**
**विकल्प्येत न्यासे स्थितिरितिविद्यासु च तथा**
**नियत्या वैयात्यं नियमितुमेवं प्रभवति।।[3]**

इति विशिष्टाद्वैतसिद्धान्ते प्रमेयमीमांसा—

---

1. अहिर्बुध्न्यसंहिता 37/27-28
2. यतीन्द्रमतदीपिका, पृष्ठसंख्या 64
3. रहस्यत्रयसारः 422

# परामनोविज्ञान तथा भारतीय दर्शन में अतीन्द्रिय ज्ञान

प्रो. बच्छराज दूगड़

सभी प्रकार की परासामान्य घटनाओं का पूर्वाग्रह-मुक्त दृष्टि से वैज्ञानिक विधियों द्वारा अध्ययन करने वाला विज्ञान परामनोविज्ञान कहलाता है। परामनोविज्ञान पर सन् 1882 के लगभग विलियम बैरेट के प्रयासों से एक व्यवस्थित, सुसंबद्ध एवं गंभीर शोध का विधिवत् श्रीगणेश हुआ। इसी वर्ष सिजविक की अध्यक्षता में सोसायटी फोर साइकिकल रिसर्च संस्थान का गठन हुआ। मायर्स, गर्नी, सर ऑलिवर लोज, सर विलियम बैरेट, सर विलियम क्रुक्स, राइन आदि के प्रयासों से 30 दिसम्बर, 1969 को परामनोविज्ञान को अमेरिका के सर्वोच्च वैज्ञानिक प्रतिष्ठान ''अमरीकन एसोसिएशन फोर द एडवांसमेंट ऑफ साइन्स'' के द्वारा वैज्ञानिक मान्यता मिली।

परासामान्य घटनाओं का भारतीय योग में भी महत्त्वपूर्ण स्थान है। पर भारतीय परम्परा अध्यात्मोन्मुखी है और परासामान्य प्रघटन आत्मोपलब्धि की साधना मार्ग में आने वाले प्रासंगिक फल हैं। आत्मप्राप्ति लक्ष्य होने के कारण भारतीय योग को तात्त्विक रूप दिया गया है तथा ज्ञान प्राप्ति के लिए तात्त्विक साधना एवं मूल्यों का जीवन अनिवार्य माना गया। इस दृष्टि से अतीन्द्रिय ज्ञान भारतीय योग का साधना पक्ष है जबकि परामनोविज्ञान उस साधना का प्रायोगिक पक्ष। यही कारण है कि परामनोविज्ञान के अध्ययन क्षेत्र में आने वाली सभी परासामान्य प्रघटन भारतीय साहित्य में विपुलरूप से उपलब्ध हैं।

## मन और मस्तिष्क का संबंध

मन और मस्तिष्क के आपसी क्रियाकलापों पर आज बहुत शोध हो रहा है। मस्तिष्क में विद्युतधारा का पता 1928 में भौतिकविद् हैंसबर्गर ने लगाया था। उन्होंने देखा- मस्तिष्क में विद्युतधारा की तरंगे लयबद्ध गति में ऊर्मियों की तरह उठती रहती हैं। प्रश्न हुआ- इन विद्युत् धाराओं का परामनोवैज्ञानिक क्षमताओं पर क्या प्रभाव पड़ता है? अन्वेषण से यह तथ्य सामने आया कि अल्फा तरंगे अतीन्द्रिय व्यवहार का कारण होती हैं। अल्फा तरंगे चिंतन-मनन के दौरान अधिक गतिशील होती हैं। पर जब चिंतन-मनन शांत होता है ये भी शांत होती चली जाती हैं और उस काल में मन की अव्यक्त शक्तियों के उभरने की संभावना होती है।

वैज्ञानिकों ने ऐसे ब्रह्मांडीय अति परमाण्विक सूक्ष्म कण की खोज की है, जिसमें घनत्व, भार, विस्फुटन, चुंबकीय क्षेत्र आदि भौतिक लक्षण नहीं हैं। वैज्ञानिकों ने इन्हें न्यूत्रिनी कहा है। ये लाखों की संख्या में हमारे शरीर के भीतर और बाहर रोशनी की गति से सारी पृथ्वी पर घूम रहे हैं। अभौतिक होने के कारण भौतिक कण उन्हें रोक नहीं पाते, कभी संयोग से टकराव हो जाता

है। ऐसे ही टकराव में वैज्ञानिक उन्हें देख पाए हैं। इसी आधार पर प्रतिभाशाली गणितशास्त्री एड्रियां ड्रॉब्स ने एक नये सिद्धान्त का प्रतिपादन किया, जिसमें न्यूत्रिनी के समान साइत्रोन कण की कल्पना की हुई है। ये ही मस्तिष्क के न्यूरोन कणों के साथ जुड़कर पराचेतना का मार्ग प्रशस्त करते हैं।

भौतिकीशास्त्री मार्टिक रदरफोर्ड ने कहा- मनुष्य की नाडी व्यवस्था पर न्यूत्रिनी कणों का महासागर प्रभाव डालता है। प्रसिद्ध अंतरिक्ष विज्ञानी एवसेल फरसोंफ ने कहा- अतीन्द्रिय संवेदन न्यूत्रिनों की भांति व्यापक मानसिक चेतना से संपन्न ''माइन्ड्रोन'' नामक कणों द्वारा होता है। इन कणों के द्वारा हमारा उपचेतन मन ब्रह्मांडीय चेतना के साथ जुड़ जाता है और सर्वज्ञ बन जाता है।

## मन का पदार्थों पर प्रभाव

मन के पदार्थों पर प्रभाव के बहुत से उदाहरण हमें पाश्चात्य और भारतीय चिंतन में देखने को मिलते हैं, इन्हें साइकोकाइनेसिस कहा जाता है। क्वांटम शास्त्र के परिपूरकता सिद्धान्त ने मन और पदार्थ के पृथक् अस्तित्व और उनके संबंध को सिद्ध कर दिया है। ब्रह्मांड के मूल तत्त्व, जैसे इलेक्ट्रोन और प्रोटोन दो-मुखी इकाइयां हैं। कुछ दशाओं में वे पदार्थ के ठोस कणों का रूप ग्रहण कर लेते हैं तथा दूसरी परिस्थितियों में वे अपदार्थ- माध्यम के भीतर तरंगों की तरह व्यवहार करते हैं। ये दोनों दशाएं एक-दूसरे के प्रतिकूल हैं तथापि उनका अस्तित्व है। अतः विज्ञानी पदार्थ और अपदार्थ की परिपूरकता के सिद्धान्त का प्रतिपादन करते हैं। संभवत हाइसनबर्ग पहला विज्ञानी है, जिसने यह बात स्वीकार की है कि इन मूल कणों के पदार्थ और अपदार्थ स्वरूप मन के प्रतिनिधि हैं। जब हम अतंरिक्ष में वस्तुगत स्तर पर देखते हैं, परमाणु वस्तु नहीं रह जाते और समय का अस्तित्व भी लुप्त हो जाता है।

इसी प्रकार यह कहा जा सकता है कि मानसिक अनुभूतियों, विचारों, बिंबों, स्मृतियों आदि का अस्तित्व स्थान, काल और पदार्थ के वस्तुत ढांचे से बाहर है, फिर भी वे भौतिक मस्तिष्क के साथ उसी प्रकार जुड़े हुए हैं, जिस प्रकार फोटोन का पदार्थहीन स्पंदनमूलक स्वरूप अपने दानेदार पदार्थ रूप के साथ।

नोबेल पुरस्कार विजेता यूजोन विगनर ने कहा- यह कहना सही नहीं है कि पदार्थ की हलचल चेतना को तो प्रभावित करती है, किन्तु स्वयं उससे प्रभावित नहीं होती। सही स्थिति यह है कि समस्त सक्रिय पदार्थ जिस चेतना को प्रभावित करता है, उससे वह प्रभावित भी होता है।[1]

सोवियत संघ की नीना कुलगीना ने प्रसिद्ध रूसी वैज्ञानिक डॉ. गेनाडी सर्जियेव और डॉ. सर्जी सैरिशेव की उपस्थिति में लेनिनग्राद विश्वविद्यालय के चिकित्सा केन्द्र की प्रयोगशाला में 10

1. नवभारत टाइम्स, वार्षिकांक 1976, पृ. 24-25

मार्च, 1970 को ऑपरेशन टेबल पर मेंढ़क को चीरकर निकाले गये उसके हृदय की गति को अपने आदेशों द्वारा तीव्र, मंद एवं एकदम बंद कर दिया। नीना स्थिर वस्तुओं को चलायमान कर सकती है।

अमेरीका व रूस के वैज्ञानिक इन शक्तियों का उपयोग अंतरिक्ष क्षेत्र में कर रहे हैं। उनके सामने यह प्रश्न है कि क्या अतीन्द्रिय शक्ति अंतरिक्ष यान से संपर्क करने व उसे नियन्त्रित करने में सफल हो सकती है? अमेरिका के अतीन्द्रिय हथियारों के संबंध में प्रसिद्ध लेखक ''रोनाल्ड मैकरई'' ने अपनी प्रसिद्ध पुस्तक ''माइंड वार्स'' में लिखा है कि अमेरिका ने अपनी ''रौलगेम'' परियोजना में प्रक्षेपास्त्रों की जांच मन की शक्ति से करके देखी है।

**मबार्टिन इवान** ने ''साईविस्वार फेयर'' नामक पुस्तक में 1960 से ही रूस में अतीन्द्रिय हथियारों पर शोधकार्य की चर्चा की है। डॉ. स्नेल बर्ग नामक वैज्ञानिक ने रूसियों द्वारा मन:शक्ति से चलने वाले हथियारों के निर्माण की बात भी कही है।

सोवियत संघ के वैज्ञानिकों द्वारा अध्ययन की हुई यह घटना भी इस दिशा में पर्याप्त प्रकाश डालती है- ''मादाम मिखाइलोबा एक पार्टी में हुई। वहां एक टेबल पर डबलरोटी उनसे कुछ दूर रखी हुई थी, उन्होंने उसकी ओर एकटक देखना शुरू कर दिया। कुछ ही देर में डबलरोटी उनकी ओर सरकने लगी। जैसे ही वह टेबल के छोर पर आई, मादाम मिखाइलोवा ने अपना मुंह खोला और अगले ही क्षण डबलरोटी उनके खुले मुंह में थी।''[1]

डॉ. लुइसा राइन एवं डॉ. जे. बी. राइन ने ड्यूक विश्वविद्यालय में अनेक वर्षों तक मन:प्रभाव संबंधी सैकड़ों परीक्षण कर कई तथ्य एकत्रित किये हैं।[2] 1972 में तेल अबीब के गेलर ने अमेरिका के राष्ट्रीय दूरदर्शन पर चुने हुए वैज्ञानिकों के समक्ष मन की क्षमताओं का प्रदर्शन किया, जिसमें धातु की चीजों को मन:शक्ति से मोड़ना आदि शामिल था। इनके अतिरिक्त अमेरिकन निवासी टेड सिरियोस ने डॉ. इयान स्टीवेंसन तथा डॉ. जे. जी. प्रेट के सामने विचार-चित्रण के भी प्रदर्शन किये।[3]

घटनाओं की विस्तृत श्रृंखलाओं को छोड़कर यदि हम भारतीय संदर्भों को देखें तो इस तरह की शक्तियों के उल्लेख बौद्ध, जैन, योग आदि दर्शनों में बहुतायत से उपलब्ध हैं। इनको किसी तरह से ज्ञान की श्रेणी में नहीं रखा जा सकता, अपितु ये एक विशेष प्रकार की शक्तियाँ ही होती हैं। वेदों में स्पर्श चिकित्सा एवं प्राचीन जैन ग्रंथों में आचार्य सिद्धसेन द्वारा मन की शक्तियों से पूरी सेना का निर्माण,[4] आचार्य पादलिप्त द्वारा आकाश गमन तथा स्वमूत्र से स्वर्ण निर्माण आदि विशिष्ट

2. साइकिक डिस्कवरीज बिहाइन्ड द आइरन कर्टेन, न्यूयार्क 1970
3. माइण्ड ओवर मैटर, मैकमिलन, न्यूयार्क, 1970
4. द जर्नल ऑव द अमेरिकन सोसायटी फॉर साइकिकल रिसर्च, 1981 में प्रकाशित इजनबड, प्रैंट व स्टीवेंसन का निबन्ध- ''डिस्टार्शन इन द फोटोग्राफ्स ऑव टेड सीरियोस''
5. योनि प्राभृत

घटनाओं का उल्लेख मिलता है। त्राटक द्वारा मन की शक्ति को एकाग्र कर किसी वस्तु को गतिशील या स्थिर करना जैन एवं योगग्रन्थों में वर्णित है। बौद्धग्रन्थों में भी पदार्थ पर मन के प्रभाव की चर्चा ऋद्धिविध नामक शक्ति के अन्तर्गत है।[1] इसे अतीन्द्रिय ज्ञान न मानकर शक्ति के रूप में सम्मिलित किया गया है।[2] योगदर्शन में भी मन पर संयम करने से अनेक विभूतियों की प्राप्ति के उल्लेख हैं तथा जैन दर्शन में भी लब्धियों के उल्लेख हैं, जिनमें तेजोलब्धि मन:शक्ति का स्पष्ट प्रमाण है।[3]

कई योगियों में इस प्रकार की शक्तियों के स्वामी होने के प्रमाण मिलते हैं। महामहोपाध्याय पं. गोपीनाथ कविराज के गुरु परमहंस स्वामी विशुद्धानंद भी इसी तरह की अतीन्द्रिय शक्तियों के स्वामी थे। पं. गोपीनाथ कविराज ने अनेक शक्तियों का स्वदृष्ट वर्णन किया है, जिनमें एक पदार्थ को दूसरे पदार्थ में बदलना, नवीन सृजन आदि सम्मिलित हैं।[4] वैज्ञानिक विश्लेषण के आधार पर यह संभव भी है क्योंकि जगत् के प्रत्येक पदार्थ में अन्य समस्त पदार्थों के उपादान विद्यमान रहते हैं। स्वामी जी के अनुसार एक पदार्थ को इच्छित पदार्थ में बदलने के लिए इच्छित पदार्थ के सजातीय उपादान को बाह्यजगत् से आकर्षित कर एक पदार्थ को दूसरे पदार्थ में परिणत किया जा सकता है।

## विभिन्न अतीन्द्रिय ज्ञान

अतीन्द्रिय-ज्ञान पर आधारित अनुभवों को प्रमुखत: चार प्रकारों में विभाजित किया जाता है- 1. विचार संप्रेषण, 2. दूर-दृष्टि 3. पूर्वाभास और 4. भूताभास।

**विचार संप्रेषण** (Telepathy)[5]-किसी भी प्रकार के भावों का एक मन से दूसरे मन तक इन्द्रियों के ज्ञात माध्यमों से निरपेक्ष संधारण टेलीपेथी है।[6] अनेक परामनोविज्ञानवेत्ता टेलीपेथी को सामान्य जीवन का साधारण अनुभव बताते हैं। उनके अनुसार अगर कभी हमें कुछ अनुभव होते हैं तो हम उन्हें मात्र संयोग मानकर नजर-अंदाज कर देते हैं। डॉ. स्टीवेन्सन ने विचार संक्रमण और अतीन्द्रिय दृष्टि संबंधी विपुल घटनाओं में से कुछेक विचार संक्रमण की घटनाओं का तथ्यात्मक

---

1. विशुद्धि मार्ग, भाग-2, ऋद्धिविधनिर्देश, परिच्छेद-12
2. बुद्धिस्ट फिलासफी, पृ. 21
3. अतीन्द्रियज्ञान, अध्याय-4
8. देखें अध्याय-4
4. महा. पं. गोपीनाथ कविराज : एक मनीषी की लोकयात्रा
5. टेलीपेथी शब्द परामनोविज्ञान के जन्मदाता फ्रेडरिक विलियम एच. मायर्स ने गढ़ा था। इससे पूर्व थोट ट्रांसफरेन्स शब्द प्रचलित था। हिंदी में इसके लिए कहीं-कहीं दूरसंवेद या परचित्तबोध शब्दों का भी प्रयोग हुआ है।
6. The telepathy is the communication of impression of any kind from one mind to another independently of recognised channel of sense. - F.W.H. Myres : Human Personality and its Survival after Bodily Death

